


जानासि? परीक्षाः
माम् रुचिकराः किं
भासयन्ति? सरलम्.
यदा यदाऽहम्
प्रगाढ़ाध्ययनं करोमि,
तदा तदा माता ददाति
माम् प्रचुरमात्रायां रसना.
आम्! रुचिकरं रसना!




आरेंज ▪ पाइनऐपल ▪ लाइम ▪ शाही गुलाब ▪ काला खट्टा ▪ कूल खस
केसर इलायची ▪ मसाला सोडा (जल जीरा) ▪ टूटी-फ्रूटी ▪ मैंगो राइप



I love you Rasna

* केवलं सुनिश्चितेषु नगरेषु उपलब्धम्

प्रथमं

IS:13019



मान्यं
सॉफ्ट ड्रिंक
कान्सेन्ट्रेटम्.
बी व्ही ओ
असमाहितम्.

Mudra:A:EAMR:5482 San




# मैगी क्लब् निः शुल्कं उपहारान् वितरति आनन्द-सन्दोहं प्रापयति!


मैगी ऑपरेशन वाइल्डलाइफ गेम' इत्यनेन सार्धं वन्यजीवान् संरक्षन्तु।



'मैगी किंग ऑफ् दी जंगल गेम्' अधिगम्य कानने विहरन्तु।

आगच्छन्तु बालाः! मैगीक्लबे प्रविशन्तु, वर्षं यावत् आनन्दं अनुभवन्तु। वृत्तपत्राणि, उपहाराः, क्रीडकानि, आमोद-प्रमोदस्य अनेकानि साधनानि।

भवन्तः एतत् मैगी नूडल्स्-पुटकानां पञ्चानां रिक्त-आवरणानां मुखपृष्ठात् निस्काष्य अस्मान् प्रेषयन्तु। सहैव स्वीयं नाम-धाम, स्वेष्टं उपहारं च लिखन्तु। अपि च, यदि भवान् मैगी-क्लब्-सदस्यः नास्ति चेत्, अनुपमोऽयं अवसरः। उपरितन-विवरणप्रेषण-काले सदस्यतायै लिखन्तु। वयं भवतः उपहारेण सह निःशुल्कं मैगी-क्लब्-सदस्यता-पत्रं प्रेषयिष्यामः।



'मैगी जादू जंगल' प्राप्य नैजं एव वनं विरचयन्तु



मैगी बर्ड-हाउसं विरचयन्तु।

आर्ची-प्रहसनं!

*अस्माकं संकेतः*
**मैगी क्लब्**
पो. ओ. बॉक्सः 5788,
नई दिल्ली-110 055





निः शुल्कं! मैगी "वर्ल्ड ऑफ एनीमल्स्" – प्रश्नोत्तर-पुस्तिका.

भवान् यत् उपहारत्रयं संचेष्यति तेन सार्धं निःशुल्कं 'वर्ल्ड ऑफ एनीमल्स्' – प्रश्नोत्तर-पुस्तिका, वन्य-प्राणिनां विषये रुचि-वर्धिका तथ्योद्घाटिका च। प्रत्येकमपि क्रीडाविषये विस्तरं अवधानेन परीक्ष्यताम्।








अपरोऽपि प्रस्तावः – नाधुनावधि "लॉज़ ऑफ दी जंगल गेम" अधिगतम्, चेत्तदा शीघ्रं आददातु।

HTA 7105SAN

# वाक्यजिज्ञासा – १

(अद्यावधि एषः विभागः गुरुशिष्यसम्भाषणरूपेण भाषासम्बन्धिनः विषयान् प्रस्तौति स्म। अत्र क्रियमाणा भाषाचर्चा बहूनां प्रिया आसीत् इति वाचकानां पत्राणां द्वारा ज्ञायते।

इतःपरं जिज्ञासाविभागस्य स्वरूपं परिवृत्तं भाविष्यति। परिवर्तनं न विषये, अपि तु स्वरूपे केवलम्। उपरि चिन्तनीयांशयुक्तं वाक्यं भविष्यति। तस्य अधः तद्विषयकं चिन्तनं विवरणं वा भविष्यति। अनन्तरम् अन्यत् वाक्यं, ततः तद्विषयकं चिन्तनं च। एवम् अनुवर्तिष्यते।

भाषाशुद्धिसम्पादनार्थं प्रयत्नं करोति जिज्ञासाविभागः। अत्र यादृशाः विषयाः प्रस्तूयन्ते तत्सम्बन्धिनः अपूर्वाः विषयाः ज्ञाताः चेत्, संस्कृतव्यवहारगताः सन्देहाः सन्ति चेत् तान् भवन्तः पत्रद्वारा सूचयितुम् अर्हन्ति। योग्याः अंशाः यथावकाशं प्रकाश्यन्ते।)

## १. सः अन्यदेकम् उपायं सूचितवान्।

० 'सः अन्यम् एकम् उपायं सूचितवान्' इति वक्तव्यम्। उपायशब्दः पुल्लिङ्गे। अन्यच्छब्दः द्वितीयाविभक्त्यन्तस्य उपायशब्दस्य विशेषणम्। अतः अन्यम् उपायं सूचितवान् इति प्रयोगः।

## २. अपराधिः कः इति न्यायाधीशः ज्ञातवान्।

० अपराधिः इति अपशब्दः। अपराधी इति प्रयोक्तव्यम्। अपराधः अस्य अस्ति इति अपराधी। इन्नन्तः एषः शब्दः।

## ३. सः तनुमनधनेन देशसेवां करोति।

० तनुमनोधनेन इति, तनुमनोधनैः इति, तन्वा मनसा धनेन च इति वा प्रयोगः करणीयः। मनःशब्दः सकारान्तः। समासे अपि सकारस्य श्रवणं भवेत् एव। धकारपरत्वात् तस्य उत्वं गुणश्च, अतः ओकारश्रवणम्। 'तनुमनोधनेन' इत्यत्र समाहारद्वन्द्वः। (तनुश्च मनश्च धनं च एतेषां समाहारः) अतः एकवचनत्वम्।

'तनुमनोधनैः' इत्यत्र इतरेतरद्वन्द्वः। अतः बहुवचनत्वम्। 'तन्वा मनसा धनेन च' इत्यत्र तु व्यस्तः प्रयोगः।

**४. काया वाचा मनसा सः देशसेवां कृतवान्।**

० 'कायेन' इति प्रयोक्तव्यं, न तु काया इति। 'काय्' इति कोऽपि शब्दः नास्ति, येन तृतीयाविभक्तौ 'काया' इति रूपं सिध्येत्। कायशब्दः अकारान्तः पुल्लिङ्गः। 'कायेन' इति तस्य तृतीयाविभक्त्यन्तं रूपम्।

**५. केषाञ्चन दिनानन्तरं सः पुनः आगतवान्।**

० 'केषाञ्चन दिनानाम् अनन्तरम्' इति वक्तव्यम्। 'चन'प्रत्ययसहितस्य षष्ठ्यन्तस्य किंशब्दस्य अन्वयः दिनशब्देन सह अपेक्षितः। दिनानन्तरम् इत्यस्मिन् समस्ते पदे दिनशब्दस्य गौणत्वम्। सविभक्तिकस्य किंशब्दस्य अन्वयः दिनशब्देन भवितुं न अर्हति। अतः दिनानन्तरम् इति समासः न करणीयः। दिनानाम् अनन्तरम् इति व्यस्तः एव प्रयोगः अत्र युक्तः।

**६. मह्यम् अतीव सन्तोषम् अभवत्।**

० एतस्मिन् वाक्ये दोषद्वयं दृश्यते। सन्तोषशब्दः पुल्लिङ्गः। अतः 'सन्तोषः अभवत्' इति प्रयोक्तव्यम्। सन्तोषादीनां गुणवाचकशब्दानां श्रवणात् सम्बन्धद्योतकस्य षष्ठ्यन्तपदस्य आकाङ्क्षा उदेति, न तु चतुर्थ्यन्तस्य पदस्य आकाङ्क्षा। अतः 'मम सन्तोषः अभवत्' इत्येव प्रयोगः।

**७. दश पुस्तकानि अवश्यानि सन्ति। कृपया प्रेषयतु।**

० 'आवश्यकानि' इति प्रयोक्तव्यं, न तु अवश्यानि इति। अवश्यशब्दस्य सामान्यार्थः 'निस्सन्देहम्' इति भवितुम् अर्हति। प्रकृते तु तादृशः अर्थः न अभिप्रेतः। प्रकृतेऽर्थे 'आवश्यक'शब्दस्य प्रयोगः करणीयः।

* *

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

सद्यः एव जनगणतिः समाप्ता। गणतिपत्रे मातृभाषा/प्रथमभाषा उल्लेखनीया भवति। तत्र संस्कृतज्ञाः 'संस्कृतम्' इति लेखयेयुः इति बहूनाम् इच्छा आग्रहश्च आसीत्। एतदनुगुणं बहुभिः संस्कृतज्ञैः लेखितम् अपि। संस्कृतज्ञानां सङ्ख्या गणत्यनुगुणं यदि लक्षशः दृश्येत तर्हि व्यावहारिकाः बहवः लाभाः स्युः। अतः एवं करणम् अनुचितं तु सर्वथा न।

'संस्कृतं मातृभाषा' इति लेखने यावान् उत्साहः आग्रहश्च आसीत् तावान् एव ततोऽप्यधिकः वा उत्साहः संस्कृतगृहनिर्माणे अपि स्यात्। इदानीं येषां संस्कृतज्ञानां गृहेषु अल्पेन प्रमाणेन संस्कृतं श्रूयते (कदाचित् न श्रूयेत अपि) तेषु इतः परं संस्कृतं सदा श्रूयेत। एतदर्थं महान् धनव्ययः श्रमव्ययः च करणीयः इति तु नास्ति खलु? मनसि दृढः सङ्कल्पः, सङ्कल्पानुगुणं प्रवर्तनं च आवश्यकम्। 'सम्भाषणार्थम् संस्कृतं जानन् अन्यः मम गृहे नास्ति' इति अस्ति चेत् सर्वप्रथमं सम्भाषणशिबिरं व्यवस्थाप्य अन्यः जनः शिक्षणीयः। द्वयोः सम्भाषणस्य आरम्भः भवति चेत् परिसरबलात् अन्ये सर्वे क्रमशः संस्कृतेन सम्भाषणं कर्तुम् उद्युक्ताः भवन्ति। एतेन क्रमेण कृताः बहवः प्रयत्नाः सफलाः दृष्टाः। अतः संस्कृतगृहविषये अपि संस्कृतज्ञानां प्रयत्नः भवतु इति आशास्ते चन्दमामा।

चन्दमामा इदानीम् अष्टमे वर्षे पदं स्थापयन्ती अस्ति। भवतां सहकारः मां सदा प्रेरयतु इति प्रार्थये।

सम्पुटः–८ एप्रिल्–१९९१ सञ्चिका–१

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






**रसप्रश्नाः–**

# राक्षसवीराणां वधः

(प्रतिदिनम् अपि युद्धे पराजयम् एव अनुभवन् रावणः महता प्रयासेन कुम्भकर्णम् उत्थाप्य रणरङ्गं प्रेषितवान्। किन्तु कुम्भकर्णः अपि हतः अभवत्। कुम्भकर्णस्य मरणं श्रुत्वा रावणः शोकतप्तः जातः। तदनन्तरघटनाः आधारीकृत्य वाल्मीकिरामयणस्य आधारेण अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तानि उत्तराणि जानन्तु।)

I. कुम्भकर्णवधात् दुःखतप्तं रावणं सान्त्वयित्वा कः रणरङ्गं प्रति प्रस्थितवान्?

(अ) प्रहस्तः। (आ) द्विजिह्वः। (इ) त्रिशिराः।

II. युद्धं प्रति प्रस्थितवन्तं तं देवान्तकः, नरान्तकः, अतिकायश्च अनुसृतवन्तः। एते के?

(अ) सेनानायकाः। (आ) रावणस्य सहोदराः। (इ) रावणस्य पुत्राः।

III. एवं प्रस्थितवतां वीराणां साहाय्यार्थं महोदर-महापार्श्वनामकौ प्रेषितवान् रावणः। एतौ कौ?

(अ) रावणपुत्रौ। (आ) रावणानुजौ। (इ) राक्षसवृद्धौ।

IV. कुम्भकर्णवधानन्तरं रामसेनां सम्मुखीकर्तुं गताः प्रमुखाः वीराः हताः अभवन्। अधः हन्तॄणां, हतानां, हननसाधनानां च नामानि निर्दिष्टानि सन्ति। एतानि योग्येन क्रमेण योजयन्तु।

| हताः | हन्तारः | आयुधानि |
|---|---|---|
| (i) महोदरः | (अ) हनूमान् | (अ) मुष्टिः |
| (ii) नरान्तकः | (आ) हनूमान् | (आ) मुष्टिः |
| (iii) त्रिशिराः | (इ) अङ्गदः | (इ) पर्वतः |
| (iv) महापार्श्वः | (ई) नीलः | (ई) खड्गः |
| (v) अतिकायः | (उ) ऋषभः | (उ) गदा |
| (vi) देवान्तकः | (ऊ) लक्ष्मणः | (ऊ) ब्रह्मास्त्रम् |

उत्तराणि–

I. –(इ). II. –(इ). III. –(आ). IV. –i)-(ई)(इ). ii)-(इ)(अ). iii)-(अ)(ई). iv)-(ऊ)(उ). v)-(ऊ)(ऊ). vi)-(आ)(आ).

# सुरिनाम्देशः

रामसेवकः शङ्करः इत्येतस्य नाम्नः श्रवणात् किं भासते भवतां मनसि? एतन्नामकः भारतीयः एव इति भासते खलु? किन्तु एषः न भारतीयः, अपि तु भूतपूर्वः सुरिनाम्देशस्य अध्यक्षः। दक्षिण-अमेरिकाप्रदेशस्य ईशान्यदिशि अस्ति सुरिनाम्देशः। स्वतन्त्रः एषः देशः आकारेण अतीव लघुः।

सुरिनाम्देशे १/३ भागजनाः भारतीयमूलाः एव। निग्रोजनाः मुलटोजनाः च आहत्य १/३ भागः भवन्ति। अवशिष्टाः विविधमूलीयाः। तेषु (तृतीयभागात्मकेषु) इण्डोनेशियजनाः अधिकसङ्ख्यया सन्ति। एतस्मिन् देशे डच्, हिन्दी, स्रनान्ताङ्गे, जावा इत्येताः भाषाः प्राधान्येन उपयुज्यन्ते।

पूर्वं सुरिनाम्देशः नेदर्ल्याण्ड्देशस्य अधीनः आसीत्। १९७५ तमे वर्षे स्वतन्त्रः देशः जातः।

सुरिनाम्देशस्य राजधानी पारामारिबो। एतस्य विस्तारः च १,६३,८२० वर्ग कि.मी.। एतस्य जनसङ्ख्या प्रायः चतुर्लक्षात्मिका स्यात्। धान्यसम्पत्त्या खनिजसम्पत्त्या च एषः देशः प्रसिद्धः जातः अस्ति।

प्राचीनकालतः अपि भारतेन सह एतस्य सम्बन्धः आसीत्। मेक्सिकोसर्वकारेण





# कविपोषणम्

धर्मसेनः नाम राजा पूर्वं प्रजारञ्जकः सन् राज्यं परिपालयन् आसीत्। तस्य त्रयः पुत्राः। ते त्रयः अपि युद्धविद्यादिषु निपुणाः। किन्तु ते विवेकचतुराः इति तु वक्तुं न शक्यते।

ते त्रयः अपि गुरुकुले यथाक्रमं विद्याभ्यासं कृतवन्तः। ते इदानीं प्राप्तवयस्काः सन्ति।

तेषां त्रयाणाम् अपि इच्छा यत् मया एव सिंहासनम् आरोढव्यम् इति। एकैकं राजकुमारं परितः अपि अनुयायिनः मित्राणि च भवन्ति। ते तु स्वस्य प्रियतमस्य राजकुमारस्य सिंहासनारोहरणम् इच्छन्ति एव। ते पक्षपातवशात् तदा तदा दुर्बोधनम् अपि कुर्वन्ति। अतः त्रयाणाम् अपि राजकुमाराणां सिंहासनारोहणेच्छा प्रबला जाता। अतः राजास्थाने त्रयः पक्षाः।

राजास्थाने जाताम् एतां परिस्थितिं दृष्ट्वा राजा खिन्नः जुगुप्सितः च। सः चिन्तितवान्– 'अहं मम राज्यं पत्न्यधीनं कृत्वा किञ्चित्कालं यावत् अरण्यं गमिष्यामि। यदा मनःशान्तिः प्राप्यते तदा प्रत्यागमिष्यामि। तावत् पत्नी एव राज्यशासनकार्यं निर्वहतु। सा एतस्मिन् कार्ये दक्षा एव' इति। अतः सः अरण्यं प्रति निर्गतवान्।

अरण्ये तेन वासवः नाम गृहस्थः दृष्टः। वासवः बन्धुमित्राणां व्यवहारतः जुगुप्सितः सन् सपरिवारम् अरण्यम् आगतः आसीत्। स च परिवारः पर्णकुटीरे निवसति। अरण्यलभ्यानि कन्द-मूल-फलानि एव परिवारजनानाम् आहारः। तथापि ते तृप्त्या जीवन्ति स्म।

वासवस्य मुखात् तस्य इतिवृत्तं श्रुत्वा पृष्टवान् राजा धर्मसेनः– "भवन्तः एवम् एव इतोऽपि कियत्कालम् अरण्ये स्थास्यन्ति? अरण्यवासेन नीरसता न अनुभूयेत वा



कर्नल् बैटर्स



रामसेवकः शङ्करः

प्रकाशितः 'मेक्सिकोचरित्र'ग्रन्थः वदति– ''कालान्तरे अमेरिकादेशे अन्तर्भूते जाते एतस्मिन् द्वीपे (सुरिनाम्देशे) सर्वप्रथमं ते भारतीयाः पदं स्थापितवन्तः, ये च वेगेन गच्छतः जलप्रवाहस्य आधारेण पूर्वस्यां दिशि प्रस्थितवन्तः आसन्'' इति।

एतस्मिन्, गते वा शतके गताः अपि भारतीयाः एतस्मिन् देशे बहवः दृश्यन्ते। ते च तत्र प्रमुखेषु पदेषु नियुक्ताः दृश्यन्ते। एतादृशेषु तद्देशीयः अध्यक्षः रामसेवकः शङ्करः अन्यतमः। अन्यः प्रमुखः भारतीयमूलः जगन्नाथलक्ष्मणः, यश्च 'न्याषनल् अस्सेम्ब्ली' अध्यक्षः अस्ति।

प्रजाप्रभुत्वयुतस्य सुरिनाम्देशस्य संसदि ५१ जनाः सदस्याः सन्ति। तथापि अत्र सेनायाः एव प्राबल्यं दृश्यते इव। केभ्यश्चित् दिनेभ्यः पूर्वं नववर्षारम्भे रामसेवकशङ्करवर्येण अध्यक्षपदवीत्यागार्थं पत्रं समर्पितम् आसीत्। कर्नल् बौटर्स्वर्यस्य नायकत्वेन युक्तस्य सैन्यस्य आग्रहः एव अत्र कारणम् आसीत्।

किन्तु सैन्यजनाः वदन्ति यत् अध्यक्षेण कृतस्य त्यागपत्रसमर्पणस्य अस्माकं च कोऽपि सम्बन्धः नास्ति इति।

वस्तुस्थितिः का इति तु न ज्ञायते। कालान्तरे एव ज्ञायेत तत्।



भवद्भिः?" इति।

"तृप्तिः एव खलु जीवने प्रधानम्? मम पत्नी–पुत्रादयः एतादृशेन जीवनेन सन्तुष्टाः सन्ति। ममापि अत्र तृप्तिः अस्ति। अतः अत्र नीरसता न उद्भवेत् एव" इति उक्तवान् वासवः।

"मानवः सङ्घजीवी। अतः सः चिरकालं यावत् मानवसमाजात् दूरे स्थातुं न अर्हति। भवान् बहूनि वर्षाणि अरण्ये जीवति चेत् भवतः पुत्राः समाजजीवनरीतिं कथं जानन्ति? रीतिज्ञानस्य अभावे समाजे जीवनं क्लेशाय भवेत्। यथा भवान् अरण्ये निवसन् जीवनं यापयति तथैव भवतः पुत्राः अपि कर्तुं न अर्हन्ति। अतः तैः सामाजिकनीतिरीतयः ज्ञातव्याः एव" इति उक्तवान् धर्मसेनः।

"सामाजिक्यः नीतयः रीतयः च यासु कथासु प्रतिबिम्बिताः स्युः तादृशीः कथाः लिखितवान् अस्मि। लिखामि, लेखिष्यामि च। मम पुत्राः एताः कथाः शृण्वन्ति, पठन्ति च। कथारूपेण बोधिताः नीतयः परिणामकारिण्यः भवन्ति एव। पञ्चतन्त्रादिकथाः एव अत्र उदाहरणम्। अतः मया लिखिताः कथाः पुत्राणां मार्गदर्शनं करिष्यन्ति। तदाधारेण ते समाजे विना क्लेशं जीवितुम् अर्हन्ति। अथवा तत्र क्लेशः अनुभूयेत इत्येव भावयेम, तदा अपि न चिन्ता। तैः अरण्यजीवनम् अभ्यस्तम् इत्यतः ते पुनः अरण्ये सुखेन स्थातुम् अर्हन्ति" इति उक्तवान् वासवः।

राजा धर्मसेनः कुतूहलं प्राप्य वासवेन एतावता लिखिताः कथाः पठितवान्। अनन्तरं वासवम् उक्तवान् सः– "महानुभाव! भवान् सामान्यः जनः न। भवता लिखिताः कथाः जनोपयोगिन्यः सन्ति। एतासां कथानां पठनेन जनाः निश्चयेन विवेकं प्राप्नुयुः। मम समस्यायाः निवारणार्थम् अहम् एताः कथाः उपयोक्तुम् अर्हामि। अतः भवता मम राजधानीम् आगत्य मम सत्कारः स्वीकरणीयः। तत्रैव किञ्चित्कालं स्थातव्यं च" इति।

तदा वासवः मन्दहासपूर्वकं राजानम् उक्तवान्– "महाराज! कयाचित् समस्यया भवान् पीड्यमानः अस्ति इति भाति। मम

कथानां साहाय्येन सा च समस्या परिहर्तुं शक्या इति भवतः भावना आगता। अतः भवान् मम कथाः अपूर्वाः भावयति। किन्तु मम कथासु तादृशं वैशिष्ट्यं किमपि नास्ति। अनुभवबलात् लिखिताः सामान्याः कथाः एताः। न तासु धर्मतत्त्वानि विशेषतः प्रतिपादितानि। तासु विशेषसन्देशः अपि कोऽपि नास्ति। आत्मतृप्त्यर्थम् एताः कथाः लिखिताः मया। भवत्कारणतः एतासां प्रचारः यदि भवेत् तर्हि तत् ममापि प्रियम् एव। मया इतोऽपि कानिचन वर्षाणि यावत् एतादृश्यः कथाः लेखनीयाः सन्ति। लक्ष्यसिद्धेः अनन्तरम् अहं भवतः आस्थानम् आगमिष्यामि" इति।

धर्मसेनः एतत् अङ्गीकृतवान्। अनन्तरं सः राजधानीं प्रत्यागत्य शासनसूत्राणि स्वयं गृहणन् उद्घोषितवान् यत् इतः परं राज्यपालनाधिकारः वंशपारम्पर्यक्रमेण राजपुत्राणां न भविष्यति, प्रजाः एव स्वस्य प्रभोः चयनं करिष्यन्ति इति।

एतस्य परिणामतः राजपुत्रेषु सिंहासनप्राप्त्यर्थं स्थिता स्पर्धा स्वयं शून्या जाता। ये सिंहासनम् आरोढुम् इच्छन्ति तैः प्रजाप्रीतिः सम्पादनीया इत्यतः ते प्रजाहितकार्येषु निरताः जाताः।

पूर्वं दत्तं वचनं स्मरन् वासवः कदाचित् धर्मसेनस्य राज्यं प्रति सपरिवारं प्रस्थितवान्। एवं गमनमार्गे सः कस्यचित् नगरस्य



धर्मशालायां वसतिं कृतवान्। तत्र तेन समीरनामकः तरुणः मिलितः।

समीरः वासवस्य इतिवृत्तम् आगमनकारणं च ज्ञात्वा तं विनयेन साष्टाङ्गं नमस्कृत्य— "श्रीमन्! भवतः मेलनं जातं यत् तत् मम सौभाग्यम् इति भावयामि अहम्। अनुभवस्य आधारेण कथालेखनप्रवृत्तिः ममापि अस्ति। मया एतावता शताधिकाः कथाः लिखिताः। भवता ताः परिशीलनीयाः, योग्यं मार्गदर्शनं करणीयं च" इति निवेदितवान्।

वासवः एतत् अङ्गीकुर्वन् समीरेण लिखिताः कथाः सर्वाः पठितवान्। अनन्तरं तासां विषये स्वस्य तृप्तिं प्रदर्शयन्— "समीर! मया जीवनस्य उत्तरार्धे यत् साधितं



तत् भवता अल्पे एव वयसि साधितम्। भवादृशः महाराजस्य सम्पर्के यदि स्यात् तर्हि देशस्य हितं भवेत्। अतः अहं महाराजं दृष्ट्वा भवतः विषयं निवेदयिष्यामि'' इति उक्तवान्।

तदा समीरः सन्तोषं प्रकटयन्– ''श्रीमन्! मम कथाः पठित्वा भवान् तृप्तिं प्रकटितवान् यत् तेन अहं नितरां सन्तुष्टः अस्मि। अहं तृप्त्यर्थं कथाः लिखामि, न तु आदरप्राप्त्यर्थम्। अतः महाराजस्य दर्शने मम विशेषतः इच्छा नास्ति। मया लिखितासु अत्युत्कृष्टा कथा अन्या एव अस्ति। ताम् अपि प्रदर्शयामि। तद्विषये भवान् स्वस्य अभिप्रायं वदतु'' इति उक्तवान्।

वासवः समीरेण दत्तं तालपत्रं पठित्वा अतृप्तिं प्रकटयन्– ''भोः, एतस्यां कथायाम् अस्पष्टता काचित् अनुभूयते मया। केन आशयेन भवता एषा कथा लिखिता?'' इति पृष्टवान्।

तदा समीरः म्लानवदनः सन्– ''श्रीमन्, मम एषा कथा भवते न अरोचत। एताम् अरुचिं साक्षात् वदतु भवान्। तेन अहम् अन्यथा तु न चिन्तयामि'' इति उक्तवान्।

तदा वासवः खेदम् अनुभवन्– ''वत्स! भवतः कथा मह्यं न अरोचत इति न। भवता एव एतद्विषये अन्यथा चिन्त्यमानम् अस्ति'' इति उक्तवान्।

''मया लिखितासु कथासु एषा एव अत्युत्कृष्टा इति मम अभिप्रायः। किन्तु भवान् पृच्छति यत् केन आशयेन एषा लिखिता इति। अतः मया तथा चिन्तितम्'' इति उक्तवान् समीरः।

''भवतः कथायां वैशिष्ट्यं किमपि अस्ति। किन्तु मया तत् स्पष्टं न ज्ञातम्। अतः कथालेखकं भवन्तं पृष्टवान् अहम्'' इति उक्तवान् वासवः।

''यत्र अनुभविनः भवतः अपि अस्पष्टता, तादृशी कथा वैशिष्ट्ययुक्ता कथं वा भवितुम् अर्हति?'' इति विषादेन पृष्टवान् समीरः।

तदा वासवः उक्तवान्– ''भवता लिखिताः अन्याः कथाः पठिताः मया। उत्तमानां कथानां लेखने समर्थः भवान् इति तु ज्ञातं मया।

एतादृशः भवान् सत्त्वहीनां कथां न लिखेत् इति भावयामि अहम्। किन्तु कथायाः आशयः स्पष्टतया न अवगतः। अतः केन उद्देशेन एषा कथा लिखिता इति पृच्छन् अस्मि" इति।

"श्रीमन्! सर्वाः कथाः केनचित् सन्देशेन युक्ताः भवेयुः एव इति तु नास्ति खलु नियमः। सन्देशरहिता कथा किम् उत्तमा न भवति? सन्देशदानार्थं मया कथाः न लिख्यन्ते। मदीयः अनुभवः आकर्षिकया शैल्या निरूप्यते मया। जनाः अपि एतादृशीं कथाम् इच्छन्ति। एतावता तृप्तिः मम" इति उक्तवान् समीरः।

तदा वासवः– "मया कथायाः सन्देशस्य विषये न पृष्टम्। केन उद्देशेन एषा कथा लिखिता इति पृष्टम्। कथायाः उद्देशः भिन्नः, सन्देशश्च भिन्नः एव। सन्देशज्ञापनार्थम् एव लिखिताः कथाः प्रायः दुर्बलाः भवन्ति। अतः उद्देशविषये ज्ञातुम् इच्छामि। कृष्णः बाल्ये विविधाभिः चेष्टाभिः मातरं गोपीः च पीडयति स्म, तोषयति स्म च। कृष्णस्य एताः लीलाः रमणीयया शैल्या चित्रिताः चेत् तत्र कः सन्देशः स्यात्? किन्तु वाचकाः स्वपुत्राणां व्यवहारेषु कृष्णस्य व्यवहारस्य साम्यं पश्यन्तः सन्तोषम् अनुभवन्ति। एवं च बाललीलायाः वर्णनम् एतादृश्याः कथायाः उद्देशः। एवम् एव भवतः कथायाः कः उद्देशः?" इति पृष्टवान्।

"श्रीमन्! भवान् साग्रहं पृच्छन् अस्ति



इत्यतः वदामि। कदाचित् कस्यचित् देवालयस्य निर्माणकार्यं दृष्टं मया। तत्र बहवः शिल्पिनः आसन्। केनचित् युवकेन शिल्पिना अपूर्वं शिल्पं निर्मितम्। किन्तु प्रधानशिल्पी असूयया तत् शिल्पं सारहीनं वदन्, धर्मदर्शी तत् यथा न पश्येत् तथा कृतवान्। एतेन तेजोवधेन खिन्नः सः युवकः शिल्पी आत्मना निर्मितानि शिल्पानि कोपेन भञ्जयित्वा ततः कुत्रापि निर्गतवान्। एतया घटनया प्रेरितः अहम् एतां कथां लिखितवान्। इदानीं भवान् वदतु – एतस्याः कथायाः विषये भवतः अभिप्रायः कः?" इति पृष्टवान् समीरः।

"इदानीं सर्वं सुस्पष्टम्। किन्तु इदानीम्

अहम् एतस्याः कथायाः विषये मम अभिप्रायं न प्रकटयामि। यतः मम चित्तशुद्धेः प्रामाणिकतायाश्च विषये अपि भवतः सन्देहः" इति उक्त्वा ततः राजधानीं प्रति गतवान् वासवः।

राज्ञः दर्शनं प्राप्य वासवः– "प्रभो! एतस्मिन् देशे ख्याताः सर्वे कवयः अहङ्कारयुक्ताः। नूतनां प्रतिभां ते उपेक्षया नाशयन्ति। अतः साहित्यक्षेत्रं दुर्बलं जायमानम् अस्ति"इति उक्तवान्। समीरस्य मेलनं, तदा प्राप्तम् अनुभवं चापि निवेदितवान् सः।

एतत् श्रुत्वा राजा धर्मसेनः आश्चर्येण– "समीरः कश्चन सामान्यः कविः। यतः तस्य नाम मया अद्यावधि न श्रुतम् एव। तादृशस्य समीरस्य कथनं श्रुत्वा भवान् निर्णीतवान् यत् एतद्देशीयाः सर्वे ज्येष्ठाः कवयः गर्वयुक्ताः इति। किम् एतत् उचितम्?" इति पृष्टवान्।

तदा वासवः मन्दहासपूर्वकम् उक्तवान्– "महाराज, प्रतिभाशालिनः समीरस्य वार्ता भवता अद्यावधि न श्रुता यत् तत् भवतः अवगुणः। तादृशस्य वार्ता भवता यथा न प्राप्येत तथा कृतवन्तः सन्ति ज्येष्ठाः कवयः। असूया एव अत्र कारणम्। भवन्तं द्रष्टुम् आगच्छन्तं मां समीरः इतरकविसमानं भावयन् मम चित्तशुद्धेः विषये अपि सन्देहं प्रकटितवान्। अहम् अपि गुणग्राही न स्याम् इति भावितवान् सः। भवद्देशे स्थिताः ज्येष्ठाः कवयः एवम् एव व्यवहरन्ति इत्यतः तेन तादृशी भावना प्राप्ता। ज्येष्ठाः अपि गुणग्राहिणः भवन्ति इति, देशे प्रसिद्धानां सम्माननं न, प्रतिभायाः सम्माननं प्रचलति इति च समीरसदृशाः नूतनाः प्रतिभाशालिनः यथा जानीयुः तथा करणं भवतः दायित्वम्। प्रतिभा पुरस्करणीया भवता" इति।

वासवेन या वस्तुस्थितिः प्रदर्शिता तेन विवेकं प्राप्तवान् राजा धर्मसेनः। ततः आरभ्य नूतनानां प्रतिभाशालिनाम् अन्वेषणं पुरस्करणं च कृतवान् सः। एवं धर्मसेनः 'कविपोषकः' इति कीर्तिं प्राप्तवान्।





## १८

(वीरसिंहस्य चिन्तनस्य अनुगुणं किमपि न प्रवर्तते। महता प्रयत्नेन वशीकृतः सुवर्णविग्रहः मार्गे अदृश्यतां गतः। विवाहार्थं नीयमाना युवराज्ञी कपिरूपेण परिवृत्ता। राजभवने प्राप्तः रहस्यनिधिः वणिग्वेषधारिभिः लुण्ठाकैः अपहृतः। एताभिः घटनाभिः दिग्भ्रान्तः जातः अस्ति वीरसिंहः। तदनन्तरम्......।)

अमृतपुरीराजः सत्यसेनः वसन्तम् आहूय उक्तवान्– "पौत्रः द्रष्टव्यः इति महती इच्छा मम। पौत्रस्य दर्शनस्य प्राप्त्यर्थं कः उपायः? कमपि मार्गं चिन्तयतु वसन्त!" इति।

"प्रभो, उत्कण्ठा निग्रहणीया भवता। 'यावत् पितृहस्तात् च्युतं राज्यं न स्वायत्तीकरिष्यामि तावत् मातामहस्य दर्शनं न करिष्यामि' इति सङ्कल्पितवान् अस्ति, भवतः पौत्रः। राज्यं स्वायत्तीकृत्य एव अत्र आगमिष्यति सः। कार्यसिद्धेः अनन्तरम् एव सः द्रष्टुं शक्यः भवता। किन्तु स च कालः अनतिदूरे एव अस्ति इति भाति मम। मादृशाः साहसिनः वीराः युवकाः बहवः युवराजस्य भवत्पौत्रस्य मार्गदर्शनानुसारं कार्यं कुर्वन्तः सन्ति। दिवंगतस्य महाराजस्य शुभाशीर्वादेन, भवतां साहाय्येन मार्गदर्शनेन च अस्माकं शक्तिः प्रवृद्धा अस्ति। वीरसिंहस्य सम्मुखीकरणार्थम् अस्ति



सामर्थ्यम् अस्माकम् इदानीम्। महाराज! स च क्षणः समीपे एव अस्ति, यस्मिन् दिने भवान् विजयिनं पौत्रं प्रीत्या दृढम् आलिङ्गेत्। अतः अधिकः उद्वेगः मास्तु भवतः'' इति उक्तवान् वसन्तः।

''वसन्त! सन्दीपस्य नाम्नः स्मरणात् एव मम शरीरं पुलकितं भवति। मनसि उत्साहः वर्धते। सन्दीपेन स्वराज्यं प्राप्तव्यम् इति इच्छन्तः भवन्तः कार्यप्रवृत्ताः सन्ति। धर्मसम्मते एतस्मिन् कार्ये ममापि सहभागः भवेत् एव खलु? भवत्सु कार्यं कुर्वत्सु, अहं किं मौनम् उपविशेयम्? मम बाहवः स्फुरन्ति। दिनं युगायते मम'' इति उक्तवान् राजा सत्यसेनः।

''प्रभो! भवतः आश्रयः अस्तीत्यतः एव खलु वयं सर्वे निश्चिन्ततया कार्ये मग्नाः? भवतः सेनानायकैः एव खलु अस्मभ्यं युद्धशिक्षणं दीयमानम् अस्ति? अमृतपुर्याः साहाय्यम् अस्ति इत्यत एव अस्मासु आत्मविश्वासः प्रवृद्धः अस्ति। भाविनि युद्धे भवतः सेनायाः एव निर्णायकं पात्रम्। एवं पदे पदे भवतः सहभागः अस्ति एव। यदि एतत्सर्वं भवान् स्मरन् भवेत् तर्हि दिनं क्षणायेत'' इति उक्तवान् वसन्तः।

वसन्तस्य युक्तियुक्तं वचनं श्रुत्वा तृप्तः राजा सत्यसेनः मन्त्रिणं सेनापतिं च आनायितवान्। ते चत्वारः अपि उपविश्य मन्त्रालोचनं कृतवन्तः।

* * * *

''प्रभो, काचित् शुभकरी वार्ता! आश्चर्यकरी घटना प्रवृत्ता अस्ति। तत्रभवता यथा चिन्तितं तथैव प्रवृत्तम् अस्ति'' इति निवेदितवान् गूढचरप्रमुखः।

''का सा घटना?'' इति कुतूहलेन पृष्टवान् वीरसिंहः।

''सेनाशिबिरे युवराज्ञी सुकन्या कपिरूपेण परिवृत्ता आसीत् खलु? सा एव इदानीं यथापूर्वं मानवरूपं प्राप्तवती अस्ति'' इति निवेदितवान् गूढचरप्रमुखः।

''सत्यं वा एतत्? कुत्र अस्ति युवराज्ञी? मम हृदयसाम्राज्ञी सा इदानीं कुत्र? भवता सा कुत्र दृष्टा?'' इति आश्चर्येण

कुतूहलातिशयेन च पृष्टवान् वीरसिंहः।

"सा मया न दृष्टा। सा इदानीं मातापित्रोः सकाशे अस्तीति श्रूयते। कपिम् अनुसृत्य गताः खलु सैनिकाः? तेषु कैश्चित् दृष्टं यत् वृक्षात् वृक्षं गत्वा मध्ये कुत्रापि अदृश्यतां गत्वा पुनः मानवरूपं धृत्वा युवराज्ञी स्वराजधानीं प्रति पलायितवती इति। सा इदानीं जयपुरे अस्ति इति दृष्ट्वा निश्चित्य आगताः सन्ति मम अनुयायिनः" इति उक्तवान् गूढचरनायकः।

"प्रियं नः प्रियम्! किन्तु शङ्करवर्मणा एषा वार्ता किमर्थं न निवेदिता?" इति स्वगतं वदन् वीरसिंहः क्षणकालं मौनम् आश्रितवान्। अनन्तरं कञ्चित् भटम् आहूय उक्तवान्— "भोः, भवता जयपुरीं गत्वा शङ्करवर्मा निवेदनीयः यत् युवराज्ञीं नेतुम् अहं स्वयम् आगच्छन् अस्मि इति। यद्यपि शङ्करवर्मणा वार्ताम् अनिवेदयता अपराधः कृतः,तथापि तं दण्डयितुम् अहं न इच्छामि। यतः मम भावी श्वशुरः सः। कन्यारत्नं मह्यं दीयते तेन। अतः कार्यसिद्धिपर्यन्तं विनयेन एव व्यवहरणीयम्। एतस्मिन् समये प्रयाणकाले समर्थः कश्चन मान्त्रिकः अपि अस्माभिः सह भविष्यति। शङ्करवर्मणः पुरतः एषः विषयः वक्तव्यः नास्ति। मम आगमनं केवलं निवेदयतु भवान्" इति। राजानं नमस्कृत्य ततः निर्गतवान् सः भटः।

"जयतु महाराजः" इति वदन् हसन्मुखः



कश्चन मन्त्रवादी श्वश्रूणि हस्तेन स्पृशन् राजास्थानं प्रविष्टवान्। मन्त्रवादिनः दर्शनात् वीरसिंहः नितरां सन्तुष्टः। तम् आसने उपवेशितवान् सः।

शङ्करवर्माणं दृष्ट्वा प्रत्यागतः दूतः म्लानवदनः सन् वीरसिंहस्य पुरतः स्थित्वा खेदेन निवेदितवान्— "महाप्रभो! घोरः अपमानः जातः। कटुवचनानि उक्त्वा प्रेषितवन्तः ते। निवेदयितुम् अनर्हाणि वचनानि उक्तानि तैः" इति।

"तैः नाम कैः? के अपमाननं कृतवन्तः? निस्सङ्कोचं वदतु। के ते दुष्टाः? किम् उक्तं तैः?" इति कोपेन पृष्टवान् वीरसिंहः।

"दूतस्य मम दर्शनम् एव आरम्भे निराकृतं



तैः। अनन्तरं शङ्करवर्मणः साहाय्यकः कश्चित् अग्रे आगत्य ... भवन्तं ... भवन्तं ....'' इति वचनम् अर्धे स्थगितवान् दूतः।

''किम् उक्तं तेन? वदतु रे!'' इति कोपेन गर्जितवान् वीरसिंहः।

''तेन उक्तम्— 'युवराज्ञी कपिरूपेण परिवृत्ता इति कथयन् भवतां राजा वीरसिंहः एव कश्चन अविवेकी कपिः। भवतां राजा पानमत्तः कपिः इव व्यवहरन् अस्ति। युवराज्ञी तु उपायेन पलायितवती। कपिरूपेण परिवृत्ता इति कथयन् भवतां राजा आत्मनः असामर्थ्यं गोपयन् अस्ति। मूर्खेण अविवेकिना कपितुल्येन सह अस्माकं कः व्यवहारः? तेन उक्तं किञ्चिदपि श्रोतुं न इच्छामः वयम्। अतः भवान् यथा आगतं तथैव प्रतिगच्छतु' इति। एतत् श्रुत्वा अहं यदा किमपि वक्तुम् उद्युक्तः तदा तैः बलात् अहं निष्कासितः। मम अस्माकं राज्यस्य च घोरम् अपमाननं जातम्'' इति निवेदितवान् सः भटः।

''अहो, कीदृशम् औद्धत्यम्! दूतम् अपमानयद्भिः तैः अवाच्यानि वचनानि अपि उक्तानि! तेषां विनाशकालः सन्निहितः। अतः एतादृशी दुर्बुद्धिः। अस्तु, शङ्करवर्माणं तत्सहकारिणः च यमसदनं प्रेषयिष्यामि। सुकन्या स्वयम् आगत्य मम पादौ यथा गृह्णीयात् तथा करिष्यामि। जयपुरीजनान् निर्गतिकान् करिष्यामि। नगरं नाशयिष्यामि। जयपुरीं धूलिसात्करिष्यामि'' इति क्रोधेन गर्जितवान् वीरसिंहः।

''तथैव करणीयं महाप्रभो! महतां कोपनस्य किं फलम् इति ज्ञातव्यं तैः। निर्दयं दण्डनीयाः ते'' इति उक्तवान् सर्वदमनः।

''सर्वदमन! युद्धार्थं सेनां सज्जीकरोतु। एतत्क्षणे एव प्रस्थानं भवेत्। लाभालाभविषये अहम् इदानीं न चिन्तयामि। बहोः कालतः अस्माकं सैनिकाः वेतनमात्रेण तृप्तिं प्राप्नुवन्तः सन्ति। विशेषलाभः न प्राप्तः तैः। जयपुर्याः आक्रमणं कृत्वा जयः प्राप्तः चेत् नगरस्य लुण्ठनम् अपि कर्तुं शक्यम्। लुण्ठनात् अमूल्यानि आभरणादीनि यानि प्राप्यन्ते तानि ते धनागारं प्रापयन्तु। अवशिष्टानि ते स्वसमीपे स्थापयन्तु नाम''

इति उक्तवान् वीरसिंहः।

"युद्धस्य अनन्तरं नगरस्य- लुण्ठनार्थम् अवकाशः अस्ति इति वदामः चेत् सैनिकाः द्विगुणितेन उत्साहेन युद्धे भागं गृह्णीयुः। सेनाम् इदानीम् एव सज्जीकरिष्यामि" इति उक्त्वा ततः निर्गतवान् सर्वदमनः।

'जयपुर्याः सेनाबलं नास्ति चेदपि साहाय्यकरूपेण अमृतपुरीसेना भवति एव। अमृतपुर्याः सेनासामर्थ्यम् अधिकम्' इत्येषः अंशः स्मृतः वीरसिंहेन। तावता ततः निर्गतः आसीत् सर्वदमनः। 'एवं तर्हि जयप्राप्त्यर्थं कः उपायः?' इति चिन्तयन् वीरसिंहः पार्श्वस्थं मान्त्रिकं पृष्टवान्– "भोः, अस्माकं सैनिकाः शत्रुसैन्यस्य सामर्थ्यातिशयम् अपि अविगणय्य युद्धं यथा कुर्युः तथा कर्तुं कमपि उपायं जानाति वा भवान्?" इति।

"श्रीमन्! कुतो वा न जानीयाम्? मन्त्रशक्त्या कर्तुम् अशक्यं किमपि नास्ति एव। तदर्थं समर्थः मन्त्रवादी आवश्यकः। एतत्सन्दर्भे मम सामर्थ्यं पश्यतु भवान्। अश्वाः रणरङ्गे यथा दृढं तिष्ठेयुः तथा करणीयम्। अश्वानां प्रतिगमनस्य अभावे सैनिकाः अपि सहजतया रणरङ्गे तिष्ठन्ति एव। मन्त्रेण अभिमन्त्रितं जलम् अहम् अश्वानाम् आहारे योजयिष्यामि। स च आहारः सेवितः चेत् अश्वाः, अग्निः पुरतः स्थितः चेदपि न प्रतिनिवर्तन्ते" इति साभिमानम् उक्तवान् मन्त्रवादी।



"साधु! साधु!" इति उक्तवान् वीरसिंहः।

मध्याह्नसमये सेना सज्जा जाता। वीरसिंहः स्वयं सेनानायकत्वं निर्वहन् आसीत्। मान्त्रिकः सर्वदमनश्चापि तम् अनुसृतवन्तौ आस्ताम्। सायङ्कालसमये सेनया जयपुरीसीमा प्राप्ता।

तदा मान्त्रिकः वीरसिंहम् उक्तवान्– "प्रभो, रात्रौ अत्रैव वासः वरं स्यात्। मन्त्रजलयुक्तम् आहारम् अत्रैव दद्मः वयम्। श्वः प्रातःकालाभ्यन्तरे अश्वानां शक्तिः पञ्चगुणिता भविष्यति" इति।

"अस्तु तावत्। उषःकाले एव अग्रे गमनं भवतु" इति उक्तवान् वीरसिंहः।

रात्रौ मान्त्रिकः महत् जलभाण्डं पुरतः



संस्थाप्य मन्त्रान् जपितवान्। अनन्तरं मन्त्रजलयुक्तः आहारः अश्वेभ्यः दत्तः। एतत्सर्वं दृष्टवतः वीरसिंहस्य महती तृप्तिः।

प्रातःकाले वीरसिंहः अश्वम् आरुह्य सैनिकान् पश्यन्– "अस्माकम् अश्वाः इदानीं विशिष्टया शक्त्या युक्ताः सन्ति। अतः युद्धे जयः अस्माकम् एव। भवन्तः धैर्येण अग्रे गच्छन्तु" इति आज्ञापितवान्।

किन्तु सैनिकानाम् अश्वाः अग्रगमने विरोधं प्रकटयन्तः आसन्। प्रायः अपूर्वा शक्तिः आगता इत्यतः इति एते अश्वाः एवं व्यवहरन्ति इति भावयन् वीरसिंहः सन्तुष्टः। सैनिकानाम् अश्वानां यादृशी स्थितिः तादृशी एव स्थितिः आसीत् वीरसिंहस्य अश्वस्य अपि। अश्वस्य चोदने सैनिकाः महान्तं प्रयत्नं कुर्वन्तः आसन्।

"गच्छन्तु अग्रे" इति उच्चस्वरेण आज्ञापितवान् वीरसिंहः।

वीरसिंहस्य सैन्यं महता कष्टेन राजभवनस्य समीपम् अगच्छत्। तावता सर्वे अश्वाः अकस्मात् अग्रिमपादौ उन्नीय हेषारवं कुर्वन्तः चित्रविचित्रं व्यवहृतवन्तः। दिग्भ्रान्ताः सैनिकाः आत्मानं सुस्थितौ स्थापयितुम् अशक्नुवन्तः अधः पतिताः। केचन तु नितरां व्रणिताः। वीरसिंहस्य सर्वदमनस्य च अश्वाः अपि एवं विचित्रव्यवहारं प्रदर्शयन्तः आसन्। अश्वस्य निग्रहणे महत् कष्टम् अनुभवन् वीरसिंहः कोपेन पृष्टवान्– "सर्वदमन! किम् एतत्! मान्त्रिकेण वयं वञ्चिताः अभवाम वा?" इति।

तावता पुरस्तात् कश्चन गम्भीरः ध्वनिः श्रुतः– "अये, दुर्मार्गगामिन्! पश्यतु अत्र!" इति।

वीरसिंहः शिरः उन्नीय राजभवनं दृष्टवान्। तत्र स च मान्त्रिकः दृष्टः। सः मान्त्रिकः स्वस्य दीर्घं श्मश्रु दीर्घकेशान् च अपनीय पार्श्वे स्थापयन् हसन् पृष्टवान्– "माम् अभिज्ञातवान् वा भवान्?" इति।

"भवान् ... भवान् ... शान्तिदेवस्य मन्त्री खलु? अये वृद्धमन्त्रिन्! मान्त्रिकवेषेण आगत्य अस्मान् वञ्चितवान् वा भवान्?"

इति कोपातिशयेन पृष्टवान् वीरसिंहः।

"आम्! मया अल्पा वञ्चना कृता। भवतः अश्वाः उन्मत्ताः यथा स्युः तथा कृतवान् अस्मि। धर्ममूर्तिं शान्तिदेवं भवान् अधर्ममार्गम् आश्रित्य वञ्चितवान्। मया तु युद्धनीतिम् आश्रयता एवं कृतम्। इदानीं शरणागतिः एव शरणं भवतः। अन्यथा प्राणवियोगः भवेत्" इति सूचितवान् वृद्धः मन्त्री।

"मम प्राणभीतिः? वृद्धः भवान् शङ्करवर्मा च मिलित्वा मां पराजेष्यतः? सुमेधराज्यस्य विशालं सैन्यम् अस्ति इति स्मरतु। स्वप्राणरक्षणं प्रथमं चिन्तयतु" इति उपहासपूर्वकम् उक्तवान् वीरसिंहः।

"मूर्ख! पश्यतु परितः" इति उक्तवान् वृद्धः मन्त्री। वीरसिंहः सर्वत्र दृष्टिं प्रसारितवान्। दुर्गभित्तेः उपरि आयुधधारिणः बहवः सैनिकाः स्थिताः आसन्। एतत् दृष्टवतः वीरसिंहस्य धैर्यं च्युतम्।

तावता वृद्धमन्त्रिणः पार्श्वे आगत्य स्थितः शङ्करवर्मा– "अये वीरसिंह! रक्तपातः निवारणीयः इति उद्देशेन अस्माभिः एषः क्रमः अनुसृतः। भवतः कोपस्य उद्दीपनं कृत्वा भवान् स्वयं यथा अत्र आगच्छेत् तथा कृतम्। राजपुत्रस्य सन्दीपकुमारस्य आदेशानुगुणम् एतत्सर्वं कृतम्। यदि प्राणाः प्रियाः स्युः तर्हि शरणागतिं प्रार्थयतु। भवतः सैन्यम्



अमृतपुरीसैन्येन आवृतम् अस्ति। शान्तिपुरस्य राजभवनं च विद्रोहिनायकेन वसन्तेन वशीकृतम् अस्ति। प्रतिरोधेन न किमपि प्रयोजनम् इदानीम्" इति गाम्भीर्येण उक्तवान्।

वीरसिंहः भयेन आतङ्केन च परितः पश्यति। तदीयाः सैनिकाः भूमौ पतिताः सन्तः वेदनाम् अनुभवन्तः सन्ति।

"भो भोः, सुमेधसैनिकाः! पश्यन्तु अत्र! शान्तिदेवमहाराजस्य सुपुत्रः युवराजः सन्दीपकुमारः अस्ति अत्र!" इति उच्चध्वनिना उक्तवान् शङ्करवर्मा।

युवराजः सन्दीपकुमारः शङ्करवर्मणः पार्श्वे आगत्य स्थितवान्।

"युवराजः सन्दीपकुमारः जयतु!" इति

जयघोषः सर्वतः श्रुतः।

"साधु, सैनिकाः साधु! भवन्तः सर्वे शरणम् आगताः इत्येव भावयामः वयम्। सर्वे आयुधानि भूमौ स्थापयित्वा पार्श्वे पङ्क्तिशः तिष्ठन्तु। भवन्तः अग्रे अपि सुमेधसैन्ये यथा अनुवर्तेरन् तथा व्यवस्थां करोमि अहम्" इति सैनिकान् उक्त्वा वीरसिंहं पश्यन् उक्तवान् शङ्करवर्मा– "वीरसिंह! अन्तिमा सूचना एषा। युवराजं सन्दीपकुमारं शरणं गच्छन् प्राणान् रक्षतु। अन्यथा मरणार्थं सिद्धः भवतु" इति।

यावत् उत्तरकथनविषये वीरसिंहः चिन्तयन् आसीत् तावता तदीयः अश्वः अग्रिमपादौ उन्नीय शरीरम् अकम्पयत्। वीरसिंहः भूमौ पतितः। अश्वः ततः पलायनम् अकरोत्।

शङ्करवर्मणः भटाः झटिति अग्रे आगत्य वीरसिंहं बद्ध्वा कारागारे स्थापितवन्तः।

सर्वदमनः आयुधम् अधः पातयित्वा हस्तौ उन्नीय शरणागतिं सूचितवान्।

मातामहः सत्यसेनः युवराजं सन्दीपकुमारं दृष्ट्वा आनन्दाश्रूणि स्रावितवान्। दुष्टस्य वीरसिंहस्य शासनं समाप्तम् अभवत् इत्यतः सन्तुष्टाः जनाः मधुरवितरणं कुर्वन्तः आनन्दोत्सवम् आचरितवन्तः।

जयानन्दमुनेः समक्षं युवराजः सन्दीपकुमारः सुमेधराज्यसिंहासनम् आरूढवान्। पट्टाभिषेकमहोत्सवः महता वैभवेन सम्पन्नः। सन्दीपकुमारः सपरिवारम् अरण्यं गत्वा मातापित्रोः स्मारकं नमस्कृतवान्। तस्मिन् स्थले मन्दिरस्य निर्माणार्थम् अपि व्यवस्थां कृतवान् सः।

अनन्तरं शुभे मुहूर्ते सन्दीपः-सुकन्ययोः विवाहः महता वैभवेन सम्पन्नः। उत्तराधिकारिणः अभावात् अमृतपुरी जयपुरी चापि सुमेधराज्ये अन्तर्भूते जाते। सुमेधराज्यस्य राज्ञी सुकन्या, राजा सन्दीपः च योग्येन मार्गेण शासनं कुर्वन्तौ प्रजावत्सलौ सन्तौ चिरकालं सुखेन जीवन्तौ सत्कीर्तिं प्राप्तवन्तौ। —(समाप्तम्।)






# साहसी श्रीकान्तः

परिवारसदस्याः प्रतिदिनं मिलिताः चेदपि तैः यथा असन्तोषः न अनुभूयते तथैव वेतालमेलनात् अपि असन्तोषम् अननुभवन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भीकरे मध्यरात्रे निर्भयं सञ्चरतः भवतः धैर्यं प्रशंसार्हम् एव। एतादृशं कार्यं केचन धीराः केवलं कर्तुम् अर्हन्ति, न तु सर्वे। किन्तु धीराणाम् अपि मनः कदाचित् मलिनं भवितुम् अर्हति। श्रीकान्तस्य कथा अत्र उदाहरणम्। श्रीकान्तस्य कथायाः श्रवणतः भवतः मार्गायासः परिहृतः स्यात्, स्वभावः अपि परिष्कृतः भवेत्। अतः मया उच्यमानां कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा




कीर्तिपुरनामके देशे गोविन्दपुरं नाम ग्रामः। तत्र श्रीकान्तः नाम युवकः आसीत्। बाल्ये एव सः मातापितृभ्यां विहीनः जातः आसीत्। अतः सः ग्रामीणानां साहाय्येन प्रवृद्धः। बाल्यतः अपि श्रमजनकेषु कार्येषु तस्य प्रवृत्तिः आसीत् इत्यतः सः तारुण्ये दृढकायः जातः।

दृढकायस्य श्रीकान्तस्य धैर्यम् अपि अपूर्वम् आसीत्। साहसप्रवृत्तिः अपि आसीत् तस्य। दश जनान् अपि युगपत् एव सम्मुखीकर्तुम् अर्हति सः। तस्य एतादृशं सामर्थ्यं दृष्ट्वा जनाः आश्चर्यं प्रकटयन्ति स्म।

गोविन्दपुरस्य समीपे अरण्यम् अस्ति। कदाचित् नरभक्षकः व्याघ्रः तत् अरण्यम् आगतः। सः तदा तदा ग्रामम् आगत्य पशुं जनं वा मारयित्वा अरण्यं नयति स्म। 'एषः नरभक्षकः व्याघ्रः मारणीयः' इति निवेदयितुं जनाः राजधानीं गतवन्तः। किन्तु तत्र राजदर्शनम् एव अप्राप्य निराशया प्रत्यागतवन्तः ते।

कदाचित् श्रीकान्तः अरण्ये काष्ठसङ्ग्रहे निरतः आसीत्। वृक्षस्य उपरि आसीत् सः। तावता काचित् तरुणी क्रन्दनं कुर्वती धावन्ती आगतवती। ताम् अनुसृत्य कश्चन घोरः व्याघ्रः आगच्छन् आसीत्।

एतत् दृष्ट्वा किञ्चित् अपि भीतिम् अप्राप्नुवन् श्रीकान्तः वृक्षात् उत्प्लुत्य व्याघ्रस्य पुरतः अतिष्ठत्। अकस्मात् उपस्थितं मानवं दृष्ट्वा चकितः व्याघ्रः तस्य उपरि आक्रमणार्थम् उद्युक्तः। किन्तु तावता श्रीकान्तः परशुना व्याघ्रं ताडितवान्। व्रणितः व्याघ्रः घोरगर्जनं कुर्वन् श्रीकान्तस्य उपरि आक्रमणम् अकरोत्। एतेन श्रीकान्तः अपि व्रणितः। तथापि सः धैर्येण प्रहरन् व्याघ्रं मारितवान् एव।

अचिरात् एव ग्रामीणैः एषा वार्ता ज्ञाता। ते झटिति श्रीकान्तस्य चिकित्सार्थं व्यवस्थां कृतवन्तः। तस्य धैर्यं प्रशंसन्तः तं शोभायात्रया नीतवन्तः अपि। महता आदरेण तस्य उपचारं कृतवन्तः च।

श्रीकान्तस्य साहसकार्यं राज्ञा शूरवर्मणा

अपि श्रुतम्। सः श्रीकान्तं स्वस्य आस्थानं प्रति आनाय्य पारितोषिकं दत्त्वा तं भटोद्योगे नियोजितवान्।

ततः अल्पे एव काले प्रतिवेशी राजा विना कारणं कीर्तिपुरस्य उपरि आक्रमणं कृतवान्। रणरङ्गे उभयोः अपि पक्षयोः घोरं युद्धं प्रवृत्तम्। राजयोः खड्गयुद्धम् अपि आरब्धम्।

एवं युद्धं यदा प्रवर्तमानम् आसीत् तदा कश्चन शत्रुभटः शूरवर्माणम् उद्दिश्य कुन्तायुधं क्षिप्तवान्। तच्च कुन्तायुधं शूरवर्मणः अश्वे लग्नम्। अश्वः हेषारवं कुर्वन् अग्रिमपादद्वयम् उन्नीतवान्। अकस्मात् प्रवृत्तया एतया घटनया शूरवर्मा पार्श्वे वलितः अभवत्।

तदा शत्रुराजः कालकेतुः शूरवर्मणः मारणार्थं खड्गम् उन्नीतवान्। किन्तु तावता विद्युद्वेगेन आगतः श्रीकान्तः कालकेतोः खड्गं पातयित्वा स्वस्य खड्गं तस्य कण्ठस्य उपरि स्थापयन्– "अये वञ्चक! शरणं गच्छतु" इति कठोरस्वरेण गर्जितवान्।

कालकेतोः एतां दशां दृष्ट्वा भीताः तदीयाः सैनिकाः पलायनं कृतवन्तः। कालकेतुः बन्दी जातः। युद्धं समाप्तम्।

युद्धविद्यां किञ्चित् अपि अजानन् अपि श्रीकान्तः धैर्यं प्रदर्शयन् शत्रुराजस्य बन्धने कारणं जातः यत् तेन राजा शूरवर्मा नितरां सन्तुष्टः। सः अमूल्यानि उपायनानि




श्रीकान्ताय दातुम् उद्युक्तः।

किन्तु श्रीकान्तः उपायनस्वीकारं तिरस्कुर्वन्– "प्रभो, उपायनम् अहं न इच्छामि। प्राणान् पणीकृत्य प्रभुः रक्षणीयः खलु प्रत्येकेन सैनिकेन? एतदनुगुणं मया मदीयं कर्तव्यं कृतम्। कर्तव्यपालनार्थं पारितोषिकं स्वीकर्तुं न इच्छामि अहम्" इति उक्तवान्।

एतत् श्रुत्वा शूरवर्मा नितरां सन्तुष्टः। सः श्रीकान्तं शस्त्रविद्यानिपुणं कारितवान्। अनन्तरं तम् अङ्गरक्षकपदे नियोजितवान् च।

ततः द्वित्राणि वर्षाणि यावत् कीर्तिपुरे वृष्टिः एव न आगता। एषा क्षामपरिस्थितिः



कथं सम्मुखीकरणीया इत्येव न जानाति शूरवर्मा।

तदा विशालाक्षः नाम ज्योतिषिकः राजानं दृष्ट्वा उक्तवान्– "प्रभो! अस्माकं राज्ये दक्षिणदिशि प्राचीनं कालिकामन्दिरम् अस्ति। भयरहितः कश्चित् यदि आत्मानं बलिरूपेण अर्पयेत् तर्हि तुष्टा देवी वृष्ट्या अस्मान् अनुगृह्णीयात्" इति।

एतत् श्रुत्वा राजा चिन्ताक्रान्तः जातः। तदा पार्श्वे स्थितः श्रीकान्तः उक्तवान्– "प्रभो, महादेव्याः पुरतः अहं मम प्राणान् अर्पयिष्यामि। प्राणार्पणे मम न काऽपि भीतिः। मम अर्पणेन तुष्टा देवी वृष्ट्या अनुग्रहीष्यंति" इति।

अनन्तरं सः देव्याः आलयं गतवान्। आलये विग्रहस्य पुरतः त्रिशूलम् आसीत्। श्रीकान्तः देवीं भक्त्या नमस्कृत्य– "जगज्जननि! मम प्राणान् प्राप्य तुष्टा भूत्वा वृष्ट्या अस्माकं देशस्य प्रजाः अनुगृह्णातु" इति उक्त्वा त्रिशूलम् उन्नीय तेन वक्षःस्थलस्य भेदनार्थम् उद्युक्तः। तावता विग्रहमुखात् वाणी निर्गता– "अलं प्राणत्यागेन श्रीकान्त! भवादृशस्य त्यागशीलस्य प्राणान् अपहर्तुं न इच्छामि अहम्। बलिसमर्पणं विना एव भवतः देशे सुभिक्षं भविष्यति" इति।

अनन्तरक्षणे एव त्रिशूलं विद्युद्रेखा इव स्फुरत् आकाशं गतम्, अदृश्यम् अभवत् च ततः पञ्चसु निमेषेषु आकाशे कृष्णमेघाः सम्मिलिताः। मेघगर्जनं श्रुतम्। तडितः स्फुरिताः। धाराकारेण वृष्टिः आरब्धा।

वृष्ट्या आर्द्रः श्रीकान्तः प्रासादम् आगत्य कालिकालये प्रवृत्तं समग्रं राजानं निवेदितवान्। राजा श्रीकान्तस्य त्यागभावनां प्रशंसन्– "भवत्कारणतः क्षामः अपगतः। जनाः सुखिनः जाताः। त्यागशीलाय भवते देशस्य कञ्चन भागं दातुम् इच्छामि। अपेक्षितं भागं प्रार्थयतु भवान्। मम सामन्तराजश्च भवतु" इति उक्तवान्।

तदा श्रीकान्तः विनयेन निवेदितवान्– "प्रभो, अहं राज्यं सामन्तराजपदवीं च न इच्छामि। भवतः पादसेवकः सन् अत्रैव

स्थातुम् इच्छामि। मां कृपया इतः मा प्रेषयतु" इति।

एतत् श्रुत्वा सन्तुष्टः राजा राज्ञ्या सह समालोच्य तस्याः प्रियसखीं श्रीकान्ताय दत्तवान्। ततः त्रिचतुर्षु वर्षेषु श्रीकान्तः द्वयोः पुत्रयोः पिता जातः।

अथ कदाचित् कीर्तिपुरराज्ये अनूह्या काचित् आपत् उपस्थिता। राज्यसीमायां स्थितम् अरण्यम् आगतः त्रिजटः नाम राक्षसः जनान् खादितुम् आरब्धवान्। 'महाबलशाली सः गज-खड्गमृगादीन् अपि लीलया मारयितुं समर्थः, अल्पेन एव प्रयासेन सः महावृक्षान् अपि उत्पाटयितुम् अर्हति' इति वार्ता श्रुता महाराजेन।

कदाचित् शूरवर्मा आस्थाने राक्षसस्य वार्तां निवेद्य– "एतस्य त्रिजटस्य वधार्थं सेना प्रेषयितुं शक्या। किन्तु तेन महती जनहानिः सम्भवेत्। अतः सन्धिप्रस्तावः करणीयः इति मम इच्छा। सः वक्तव्यः यत् एवं स्वेच्छया जनानां मारणं मास्तु, भवते आहारार्थं प्रतिदिनं रुचिकरं पक्वं मांसं प्रेषयिष्यामः इति। किन्तु एका आपत्तिः अत्र। यः दूतरूपेण गच्छति तं सः राक्षसः दर्शनसमनन्तरम् एव खादितुम् अपि अर्हति। एतादृशम् अपायं सम्मुखीकर्तुं कः सिद्धः?" इति।

तदा सर्वेषां दृष्टिः श्रीकान्तस्य उपरि पतिता। सभ्यानाम् आशयं जानन् राजा श्रीकान्तम् उक्तवान्– "श्रीकान्त! इतः पूर्वं



भवता बहुवारम् असीमं धैर्यं प्रदर्शितम्। प्राणत्यागार्थम् अपि सिद्धः जातः आसीत् भवान्। भवादृशः धीरः साहसी च अस्माकं देशे अन्यः नास्ति। अतः भवान् राक्षससमीपं गत्वा कार्यं साधयित्वा आगन्तुम् अर्हति वा?" इति।

तदा श्रीकान्तः विनयेन राजानं नमस्कृत्य- "क्षन्तव्यः अहम्। एतादृश्यां परिस्थितौ अहं दूतरूपेण राक्षससमीपं गन्तुं न शक्नोमि" इति।

श्रीकान्तस्य एतत् उत्तरं श्रुत्वा सर्वे आश्चर्यचकिताः।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! श्रीकान्तः युद्धविद्यायाम् अपरिणतः सन् अपि राजनिमित्तं प्राणान् अर्पयितुं सिद्धः

आसीत्। प्राणापायम् अपि अविगणय्य सः कालकेतोः बन्धनार्थं प्रयत्नं कृतवान्। अनन्तरं सुभिक्षार्थं देव्यै आत्मनं समर्पयितुम् उद्युक्तः सः। एतावता ज्ञायते खलु-सः अप्रतिमधीरः साहसी च इति? किन्तु राक्षसविषये किमर्थं तेन अधैर्यं प्रकाशितम्? किं प्राणापायभीतिः उत्पन्ना वा तस्य मनसि? अथवा गर्वकारणतः अविवेकः उत्पन्नः स्यात् वा? एतस्य योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''धैर्येण साहसेन वा राक्षसस्य सम्मुखीकरणं न युक्तम् इति जानन् श्रीकान्तः तथा कृतवान् स्यात् इति भाति मम। युद्धे तु विलक्षणा परिस्थितिः अकस्मात् उत्पन्ना इत्यतः धैर्येण व्यवहृतवान् श्रीकान्तः। भक्त्या प्रेरितः सन् आत्मनं बलिरूपेण अर्पयितुम् उद्युक्तः सः। किन्तु राक्षसविषये भिन्ना एव परिस्थितिः। अविवेकिनः राक्षसस्य पुरतः येन केनापि कारणेन स्थितिः नाशाय भवेत्। तादृशं कार्यम् अविवेकितां द्योतयेत्। राक्षसः सैन्यबलेन कपटोपायेन वा जेतव्यः। धीरः श्रीकान्तः न उपायचतुरः। सैन्येन सह गमनम् एव उचितम् इति श्रीकान्तस्य आशयः आसीत्। दुष्टः राक्षसः सन्धिं न अङ्गीकुर्यात्, अङ्गीकृत्यापि न पालयेत् इति जानाति स्म सः। अन्यच्च इदानीं श्रीकान्तस्य पत्नीपुत्रादयः सन्ति। तेषां योगक्षेमस्य निर्वहणं पोषणं च एतस्य कर्तव्यं खलु? एतदपि स्मृतं तेन। अतः एव तेन राज्ञः प्रस्तावः तिरस्कृतः। सैन्येन सह गत्वा राक्षसं मारयित्वा आगच्छतु इति राजा यदि उक्तवान् स्यात् तर्हि श्रीकान्तः अङ्गीकृतवान् स्यात्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# योग्यं प्रतिफलम्

पूर्वं कस्मचित् राज्ञः कश्चित् कृषिकः मित्रम् आसीत्। यदा यदा राजा मृगयार्थं गच्छति तदा प्रत्यागमनसमये सः कृषिकस्य गृहे किञ्चित्कालं तिष्ठति। तदा कृषिकस्य पत्नी मिष्टालुकं पक्त्वा ददाति। तत् खादित्वा तृप्त्या राजा प्रत्यागच्छति।

कदाचित् विशिष्टस्य कुद्दालस्य क्रयणार्थं राजधानीं प्रति गन्तव्यम् आपतितं कृषिकेण। तदा पत्नी मिष्टालुकानि सङ्गृह्य पत्युः हस्ते अर्पयन्ती– "मिष्टालुकानि महाराजस्य प्रियतमानि। अतः राजानं दृष्ट्वा एतानि समर्प्य आगच्छतु" इति उक्तवती।

"मूर्खे! महाराजाय कोऽपि एतादृशम् अल्पमूल्यकम् उपायनम् अर्पयति वा? एतत् दृष्टवन्तः सभ्याः किं न उपहसेयुः?" इति असमाधनेन उक्तवान् कृषिकः।

"प्रियकरं वस्तु अल्पं चेत् अपि तस्य प्राप्त्या राजा तुष्येत् एव। राज्ञः तोषार्थम् उपायनं नीयते, न तु सभ्यानां तृप्त्यर्थम्। अतः एतानि नयतु भवान्" इति साग्रहम् उक्तवती कृषिकपत्नी।

पत्न्याः वचनं तिरस्कर्तुम् अशक्नुवन् कृषिकः मिष्टालुकानि स्वीकृत्य राजधानीं प्रति प्रस्थितवान्। कृषिकः लघूनि मिष्टालुकानि एकैकशः खादन् गतवान्। अतः तेन राजधानी यदा प्राप्ता तदा स्यूते एकम् एव बृहत् मिष्टालुकम् अवशिष्टम् आसीत्, तावदेव। 'एतत् एव राज्ञे समर्पयिष्यामि। आकारेण एतावद्बृहत् मिष्टालुकं राज्ञा इतः पूर्वं न दृष्टम् अपि स्यात् कदाचित्' इति चिन्तितवान् कृषिकः।

राजसभा प्रचलन्ती आसीत्। अतः कृषिकः राज्ञः दर्शनं प्राप्तुम् इच्छन् बहिः एव स्थितवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

राजसभा समाप्ता। तावता तत्र उपस्थितं कृषिकं दृष्टवान् राजा। सः महता सन्तोषेण कृषिकं स्वागतीकृत्य कुशलप्रश्नान् पृष्टवान्। अनन्तरं कृषिकः आत्मना आनीतं मिष्टालुकं प्रदर्श्य– "भवदर्थम् आनीतम् एतत्" इति उक्तवान्।

राजा महता सन्तोषेण तत् स्वीकृत्य पार्श्वस्थं भटम् आहूय– "कोषाध्यक्षं वदतु यत् एतत् मिष्टालुकं सुरक्षितं स्थापनीयम् इति। एतस्मै दातुं सहस्रं रूप्यकाणि आनयतु च" इति आज्ञां कृतवान्।

पारितोषिकं दत्त्वा राजा कृषिकम् उक्तवान्– "आगच्छतु। सहैव भोजनं करवाव" इति।

राज्ञः एतादृशम् औदार्यं दृष्ट्वा कश्चन सभ्यः असूयां प्राप्तवान्। 'मया अपि राजतः पारितोषिकं प्राप्तव्यम्' इति आलोच्य सः एकम् उत्तमजातीयम् अश्वम् आनीय राज्ञः पुरतः स्थापयित्वा– "प्रभो! एषः उत्तमजातीयः अश्वः उपायनरूपेण समर्पणार्थम् आनीतः मया। एतस्य स्वीकरणेन अहम् अनुग्रहणीयः" इति निवेदितवान्।

एतस्य सभ्यस्य आशयः राज्ञा ज्ञातः एव। योग्यः पाठः पाठनीयः इति आलोच्य सः भटम् आहूय उक्तवान्– "भोः, परह्यः कृषिकेण केनचित् बृहत् मिष्टालुकं समर्पितं खलु? तत् आनयतु" इति।

भटः तत् मिष्टालुकम् आनीय राज्ञः पुरतः स्थापितवान्। राजा तत् मिष्टालुकम् अश्वदात्रे सभ्याय यच्छन्– "भोः, एतत् सामान्यं मिष्टालुकं न। सहस्ररूप्यकात्मकमूल्यकम् एतत्। भवता उत्तमाश्वः उपायनरूपेण समर्पितः खलु? अतः एतत् अमूल्यं मिष्टालुकं दीयते भवते" इति उक्तवान्।

दुराशायाः योग्यं प्रतिफलं प्राप्य सः सभ्यः लज्जया शिरः अनवमय्य ततः निर्गतवान्। 'योग्यं प्रतिफलं प्राप्तं तेन' इति वदन्तः हसितवन्तः अन्ये सभ्याः।



# ज्ञानभाण्डागारम्

## वयम् अभिन्नाः

पण्डितः गोविन्द वल्लभ पन्तमहोदयः १८८७ तमे वर्षे उत्तरप्रदेशे अलमोडामण्डले जन्म प्राप्तवान् आसीत्। भारतस्य स्वातन्त्र्यार्थं प्रयत्नं कृतवत्सु महात्मसु एषः प्रमुखः आसीत्। यदा भारतं स्वतन्त्रं जातं तदा शासनव्यवहारे एषः मूलस्तम्भायते स्म। १९५५ तमात् संवत्सरात् स्वमरणं यावत् (क्रि.श. १९६१) एषः गृहमन्त्रिस्थानम् अलङ्कृतवान् आसीत्। १९५७ तमे वर्षे एतेन 'भारतरत्न'पदकं प्राप्तम् आसीत्।

१९४६ तमे वर्षे डिसेम्बर्मासे २१ दिनाङ्के अलहाबादविश्वविद्यालयस्य घटिकोत्सवे भाषमाणेन एतेन एवम् उक्तम् आसीत्—

"भारतीयः इतिहासः अत्र जातानां सर्वेषां पैतृकसम्पत्तिः। एतस्य देशस्य महान् इतिहासः अस्ति। हिन्दुः वा भवतु मुस्लिम्जातीयः वा, एतस्य देशस्य इतिहासस्य विषये अभिमानं प्राप्तुं समानम् अधिकारम् अर्हति एव। भिन्नमते जातेषु अपि भारतीयेषु अभिन्नं रक्तं प्रवहति। अखण्डे भारतदेशे वयं सर्वे जाताः स्मः। सुदीर्घे भारतीये इतिहासे कदाचित् राजकीयघटनाभिः, मतप्राबल्येन च प्रमुखं पात्रं निरूढं स्यात्। तथापि परमतसहिष्णुता भारतीयजीवनस्य प्रमुखं तत्त्वम्" इति।

सत्यम् एतत्। 'स्वमतनिष्ठा', 'परमतसहिष्णुता' च सामाजिकजीवनरथस्य चक्रे इव।

## भवन्तः जानन्ति वा?

१. द्विचक्रिका(सैकल्) केन कदा सर्वप्रथमं सज्जीकृता?

२. सर्वप्रथमं कः साहसचक्रम्(सर्कस्) आयोजितवान्? तच्च कदा?

३. केन सर्वप्रथमं सिनेमास्टुडियो निर्मितम्? तस्य स्टुडियो नाम किम्?

४. आधुनिकं सिङ्गपुरनगरं केन कदा स्थापितम्?

५. लघुतमः केन्द्रशासितप्रदेशः कः? तत्रत्या जनसङ्ख्या कियती? तत्रत्यैः जनैः प्रधानतया भाष्यमाणा भाषा का?

(उत्तराणि ३६तमे पृष्ठे)

# दुर्गामाता



ऋषयः भारतीयसंस्कृतेः आधारपुरुषाः। ते परोक्षया दृष्ट्या इन्द्रियागोचरान् अपि विषयान् जानन्ति स्म। एतेनैव क्रमेण तैः जगत्तत्त्वं ज्ञातम्। अतः एव ते सिद्धपुरुषाः इति उच्यन्ते।

भक्तानाम् इच्छायाः आवश्यकतायाश्च अनुगुणं दैवीशक्तिः विभिन्नैः रूपैः प्रकटिता भवति इति तत्त्वं तैः ज्ञातम्। एतादृशेषु प्रकटरूपेषु मातृरूपं प्रधानम्। मातृरूपस्यापि विविधानि नामानि। तेषु 'दुर्गा' इति नाम सर्वसुपरिचितम्।

आसेतु आहिमाचलं प्राचीनकालात् अपि वैष्णवी, काली, दुर्गा, कामाक्षी, मूकाम्बिका, भगवती, परमेश्वरी इत्यादिभिः विविधैः नामभिः पूज्यमाना अस्ति दुर्गामाता। एतस्याः प्रसिद्धानि मन्दिराणि अपि बहूनि।

एषा माता परशिवस्य पत्नी पार्वती इत्यपि भाव्यते। पार्वत्याः सतीदेवीरूपं सुप्रसिद्धम्।

दुर्गादेवी प्रायः चतुर्भुजा। द्वाभ्यां हस्ताभ्यां सा शङ्खं चक्रं च धरति।

महिषासुरमर्दिन्यादिषु रूपेषु सा बहुहस्ता अपि दृश्यते, तस्याः हस्तेषु विविधानि आयुधानि दृश्यन्ते।

विश्वविनोदिन्याः दुर्गामातुः वाहनं सिंहः। जगज्जननी दुर्गामाता सर्वान् समानया करुणया पश्यति। तस्याः पतितोद्धारकत्वं मोक्षदायकत्वं च प्रसिद्धम्। अतः भक्ताः तां महत्या भक्त्या इष्टसिद्ध्यर्थं प्रार्थयन्ते।

नवरात्रोत्सवसन्दर्भे देशस्य विविधेषु भागेषु विविधाः उत्सवाः महता वैभवेन प्रचलन्ति।

# र स वा र्ताः



### रैलयानध्वनिम् अतिशेते मानवध्वनिः

जपान्देशीयः योषिहिकोहिटोनामकः ३६ वर्षीयः कश्चित् तादृशं ध्वनिं स्वमुखेन करोति, यश्च धावतः रैलयानस्य ध्वनिम् अपि अतिशेते। ध्वनिस्पर्धायां योषिहिकोहिटो "युद्धम् आवश्यकं चेत् धावतु" इति महोच्चस्वरेण उक्तवान्। स च स्वरः, ११५८ डेसिबल्सुतः अधिकं शब्दं कुर्वतः रैलयानस्य शब्दस्य अपेक्षया १५ गुणितम् अधिकः आसीत् इति श्रूयते।

### सङ्गीतम् औषधायते!

सङ्गीतं विशिष्टान् कांश्चन रोगान् निवारयितुम् अर्हति इति वयं सर्वे जानीमः एव। एषु दिनेषु मास्कोनगरे सम्मिलिताः वैद्याः, मानसिकवैद्याः, सङ्गीतज्ञाः च सम्भूय संशोधनं कृत्वा घोषितवन्तः यत् सङ्गीतं व्याधिनिरोधकशक्तिं वर्धयति अपि इति। विशिष्टानि जानपदगीतानि कानिचन गृहपशूनाम् आरोग्यं वर्धयन्ति इत्यपि अंशः संशोधनात् ज्ञातः अस्ति।



## सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. केन ईजिप्टदेशीयेन लेखकेन साहित्यविषये नोबेल्पारितोषिकं प्राप्तम्? तच्च कदा?

२. सर्वासां भारतीयभाषाणाम् उपरि कस्याः भाषायाः प्रभावः निश्चयेन अस्ति?

३. तस्याः भाषायाः अत्यधिकप्रभावेण युक्ता दक्षिणभारतीया भाषा का?

४. २,५०० वर्षेभ्यः पूर्वं एव रचितं व्याकरणं संस्कृतेतरस्यां कस्यां भाषायाम् आसीत्?

५. जम्मु-काश्मीरप्रदेशस्य जनभाषा का?

६. संस्कृतभाषोपनिबद्धः अतिप्राचीनः ग्रन्थः कः?

## उत्तराणि

### सामान्यज्ञानम्

१. कीर्क् पाट्रिक् मेक्मिलन्वर्येण। १८३९ तमे वर्षे।

२. भूतपूर्वः आंग्लसैनिकः पिलिप् आस्टले। १७६९ तमे वर्षे।

३. थामस् एडिसन्वर्येण। १८९३ तमे वर्षे फ्रेब्रवरी १ दिनाङ्के। तस्य च नाम 'ब्लाक् मेरिया' इति।

४. सर् स्टामफोर्ड् राफल्स्वर्येण। १८१९ तमे वर्षे।

५. लक्षद्वीपः। ४० लक्षात् अधिकम्। मलयालभाषा।

### साहित्यज्ञानम्

१. नजीब् महफोज्वर्येण। १९८८ तमे वर्षे।

२. संस्कृतभाषायाः।

३. तेलुगुभाषा।

४. तमिळ्भाषायाम्। तस्य च नाम 'तोल्काप्पियम्' इति।

५. डोग्रीभाषा।

६. ऋग्वेदः।

प्रपञ्चपुराणगाथावली – ३

# मातृभक्तौ साहसिनौ

पुरातने अर्गोसुनगरे शनिग्रहस्य कुमार्याः जूनोदेवतायाः आलयः आसीत्। प्रसिद्धे एतस्मिन् देवालये सैडिप्पेवर्या देवतार्चनकार्यं निर्वहति स्म।

सैडिप्पेवर्यायाः द्वौ पुत्रौ – क्लियोबिस्, बैटन् चेति। तौ उभावपि दृढकायौ। क्रीडादिषु कार्येषु च तौ सदापि अग्रगामिनौ।





कदाचित् एतौ मात्रा सह सुदूरे स्थितं बन्धुगृहं गतवन्तौ। अश्वशकटेन तैः प्रयाणं कृतम् आसीत्। गम्यस्थानस्य प्राप्तेः अनन्तरं दुरदृष्टवशात् शकटवाहकौ उभौ अपि अश्वौ अकस्मात् प्राणान् त्यक्तवन्तौ।



स्वग्रामं प्रति गमनार्थम् अश्वौ प्राप्तुं तौ पुत्रौ सर्वत्र बहुधा अन्वेषणं कृतवन्तौ। किन्तु कुत्रापि अश्वौ न प्राप्तौ। सायङ्कालपर्यन्तं तयोः अन्वेषणं प्रवृत्तम्।

अनन्तरदिने जूनोमन्दिरे विशेषपूजा-कार्यक्रमः निश्चितः आसीत्। पूजासमये अर्चिकया सैडिप्पेवर्यया तत्र अवश्यं स्थातव्यम् एव। किन्तु शकटेन गन्तुम् अश्वौ न स्तः। वार्धक्यकारणतः सा पादाभ्यां तावद्दूरं गन्तुम् अपि न शक्नोति।





तौ सहोदरौ समस्यापरिहारविषये बहुधा चिन्तनं कृतवन्तौ। अन्ते किमपि निश्चित्य तौ मातरम् उक्तवन्तौ– "भवती शकटे उपविशतु" इति। 'पुत्राभ्यां कुतश्चित् अश्वौ आनीतौ स्याताम्' इति आलोच्य सैडिप्पेवर्या शकटे उपविष्टवती।

अश्वयोः अभावात् तौ सहोदरौ आत्मानम् एव वाहकस्थाने नियोजितवन्तौ। एतत् दृष्टवत्याः मातुः महत् दुःखं जातम्। किन्तु समये मन्दिरं प्राप्तव्यम् एव आसीत् इत्यतः सा दुःखं निगृह्य मौनं स्थितवती।





तौ सहोदरौ उन्नते, निम्नोन्नते, दुर्गमे च मार्गे चापि शकटम् आकर्षन्तौ अग्रे गतवन्तौ। तावता वृष्टिः आरब्धा। तथापि तौ सहोदरौ शकटकर्षणात् विरतौ न जातौ। 'पूजार्थं समये मन्दिरं प्राप्तव्यम्' इति तयोः प्रबलः आशयः।

प्रातःकालसमये तौ नगरसमीपम् आगतवन्तौ। तयोः मातृभक्तिं साहसकार्यं च दृष्ट्वा जनाः सन्तोषातिरेकेण जयघोषं कृतवन्तः। स्वेदेन आर्द्रौ तौ सहोदरौ दीर्घं विश्वसन्तौ मातरं समये मन्दिरं प्रापितवन्तौ।





पूजाकार्यक्रमः यथाविधि - निर्विघ्नं समाप्तः। पूजायाः अनन्तरं माता देवीं प्रार्थितवती यत् मम पुत्रयोः जीवने कष्टानि यथा न आपतेयुः, तौ सुखेन यथा तिष्ठेयुः तथा वरेण अनुगृहणातु इति।

नितरां श्रान्तौ तौ सहोदरौ शयनगृहं गत्वा शयनं कृतवन्तौ। निद्रातः तयोः उत्थानम् एव न जाम्। यतः तौ भगवतः पादौ आश्रितवन्तौ आस्ताम्।





एवं तौ सहोदरौ मातृभक्त्या साहसप्रवृत्त्या च जगद्विख्यातौ जातौ। अर्गोसनगरजनाः तयोः सहोदरयोः स्मरणार्थं तयोः सुविशालं विग्रहं प्रतिष्ठापितवन्तः।



# अभिमानधनः

मङ्गलपुरग्रामे सुधीरः नाम कश्चित् आसीत्। कर्मकरवृत्त्या सः जीवनं यापयति स्म। स्वशक्तौ तस्य दृढः विश्वासः। अभिमानधनः सः कदापि कस्यापि आश्रयणं न करोति स्म।

तस्मिन् ग्रामे पशुपतिः नाम धनिकः आसीत्। कर्मकरादिभ्यः ऋणं दत्त्वा अधिकं वृद्धिं प्राप्नोति स्म सः। 'कष्टेन जीवन् अपि एषः सुधीरः कदापि मत्तः ऋणं न स्वीकृतवान्। महत् धाष्ट्र्यं सुधीरस्य' इति चिन्तयति स्म पशुपतिः।

कदाचित् सोमनाथः नाम कश्चन दूरबन्धुः पशुपतेः गृहम् आगतवान्। वार्तालापमध्ये सः पशुपतिम् उक्तवान्– "भवतः ग्रामे सुधीरः नाम कर्मकरः अस्ति इति श्रूयते। सः मया द्रष्टव्यः खलु? कदाचित् तम् अत्र आनाययति वा?" इति।

तदा पशुपतिः– "सुधीरं भवान् अपि जानाति वा? गर्वपिण्डं सः। सः किमर्थं द्रष्टव्यः भवता? सामान्यं तं दूरस्थः भवान् कथं जानाति?" इति पृष्टवान्।

"सुधीरम् अहं सम्यक् जानामि एव। कादाचित्कतया सः कार्यार्थम् अस्मद्ग्रामम् अपि आगच्छति। किन्तु भवता यथा चिन्त्यते तथा नास्ति खलु सुधीरः? सः स्वाभिमानयुक्तः इति अहं जानामि। सः गर्वेण धाष्ट्र्येन वा व्यवहरति इति तु न भाति मम" इति उक्तवान् सोमनाथः।

तदा पशुपतिः तिरस्कारयुक्तेन स्वरेण– "दूरतः पर्वतः रम्यः। वस्तुतत्त्वं तु एतद्ग्रामीणाः वयं जानीमः। गर्वस्य साकारमूर्तिः सुधीरः" इति उक्तवान्।

एतत् श्रुत्वा सोमनाथः हसन्– "स्वाभिमानस्य गर्वस्य च भेदः भवद्भिः न

ज्ञातः इति भाति। अतः एव भवन्तः एवं वदन्ति'' इति उक्तवान्।

एतां चर्चाम् अनुवर्तयितुम् अनिच्छन् पशुपतिः पृष्टवान्– ''तदस्तु। कस्य कार्यस्य निमित्तं सुधीरः द्रष्टव्यः भवता?'' इति।

''अस्मद्ग्रामस्थस्य वेङ्कटस्य गृहस्य कार्यं कृतं सुधीरेण। तत्समये वेङ्कटेन समग्रं धनं न दत्तम् आसीत्। इदानीं तत् धनं मम हस्ते दत्तवान् अस्ति सः। मया एतत् प्रापणीयम्'' इति उक्तवान् सोमनाथः।

तदा पशुपतिः सेवकम् आहूय उक्तवान् यत् सुधीरम् अत्र आगन्तुं वदतु इति।

'सुधीरस्य गर्वः नास्ति, किन्तु स्वाभिमानः अस्ति' इत्येतं विषयं प्रमाणीकर्तुम् इच्छन् सोमनाथः ततः प्रस्थितं कर्मकरम् उक्तवान्– ''मम आगमनं तं मा वदतु। अस्माकं स्वामी आहूतवान् अस्ति इति वदतु'' इति।

यदा सः सेवकः सुधीरस्य गृहं गतः तदा सुधीरः गृहस्य पुरतः वृक्षस्य अधः उपविश्य रज्जुनिर्माणं कुर्वन् प्रतिवेशिना वृद्धेन सह वार्तालापं कुर्वन् आसीत्। पशुपतेः सेवकेन उक्तं श्रुत्वा उक्तवान् सुधीरः– ''क्रियमाणं कार्यं त्वरया समापनीयम् अस्ति मया। अतः त्वरया किमपि सूचनीयम् इति अस्ति चेत् पशुपतिवर्यः एव अत्र आगत्य सूचयतु। मया एव तत्र आगन्तव्यं चेत् क्रियमाणं कार्यं समाप्यैव आगच्छेयम्'' इति।

एतत् श्रुत्वा पार्श्वे उपविष्टः वृद्धः– ''किं भोः सुधीर! पशुपतिवर्येण सूचना प्रेषिता। सर्वाणि कार्याणि परित्यज्य गन्तव्यं भवता।



धनिकस्य तस्य अवकृपा क्लेशाय स्यात्" इति उक्तवान्।

"भगवतः सृष्टौ धनिकः निर्धनश्च समानौ। मम दृष्ट्या अपि एवम् एव। येन त्वरया कार्यं समापनीयं सः एव अन्यस्य समीपं गच्छेत्। अहम् इदानीं कुत्रापि न गच्छामि" इति उक्तवान् सुधीरः।

सः सेवकः गृहं गत्वा सुधीरेण यद्यत् उक्तं तत्सर्वं पशुपतिं विस्तरेण निवेदितवान्। एतत् श्रुत्वा पशुपतिः सोमनाथम् उक्तवान्– "श्रुतं खलु सर्वम् अपि? अहो, धाष्ट्र्यं सुधीरस्य!" इति।

तदा सोमनाथः पशुपतिम् उक्तवान्– "भोः, सुधीरः भवतः सेवकः तु न खलु, येन सूचनासमनन्तरम् एव आगच्छेत्?" इति।

"सः मम सेवकः न स्यात्। तथापि धनिकः अहम् आदरेण द्रष्टव्यः खलु तेन? वृद्धेन सः स्मारितः। तथापि अनादरेण व्यवहृतवान् एषः। किम् एतत् गर्वस्य लक्षणं न?" इति कोपेन उक्तवान् पशुपतिः।

एतत् श्रुत्वा क्षणकालस्य मौनस्य अनन्तरं सोमनाथः उक्तवान्– "भवता सूच्यरूपेण सेवकद्वारा कार्यस्वरूपं यदि सूचितं स्यात्, तच्च कार्यं गुरुतरं यदि स्यात्, तर्हि सुधीरः अवश्यम् उपस्थितः अभविष्यत्" इति।

"सर्वं कपोलकल्पितं वचनम् एतत्। गर्वितः सः मद्विषये आदरवान् नास्ति एव" इति उक्तवान् पशुपतिः।

"किमर्थं चर्चा? धनम् अस्तीत्यतः सर्वे माम् आदरेण पश्येयुः इति भवतः इच्छा।



किन्तु कस्यापि कृपया प्राप्तव्यं किमपि नास्तीत्यतः सुधीरः सर्वान् समानतया पश्यति। कार्यस्वरूपं दृष्ट्वा त्वरया किं करणीयम् इति निश्चिनोति सः। एतत् इदानीम् एव प्रमाणीकरिष्यामि। पश्यतु'' इति पशुपतिम् उक्त्वा सेवकम् आहूय उक्तवान् सोमनाथः– ''भोः, गत्वा सुधीरं वदतु यत् अस्माकं स्वामी अस्वस्थः अस्ति। त्वरया भवतः साहाय्यम् अपेक्षते इति'' इति।

सेवकद्वारा एतत् श्रुत्वा त्वरया आगतः सुधीरः पशुपतिं दृष्ट्वा नमस्कृत्य– ''श्रीमन्! प्रथमवारं यदा सेवकः आगतः तदा सः अस्वास्थ्यवार्तां न उक्तवान् एव। मया इदानीं कीदृशं साहाय्यं करणीयम्? वदतु तावत्'' इति उक्तवान्।

''मम कार्यार्थम् अन्या व्यवस्था कृता मया। किन्तु भवतः आगमनं व्यर्थं न। मम बन्धुः सोमनाथः भवन्तं द्रष्टुम् इच्छति'' इति हसन् उक्तवान् पशुपतिः।

पार्श्वे स्थितः सोमनाथः– ''भोः! अस्मद्ग्रामीणेन वेङ्कटवर्येण दत्तं धनम् एतत्। भवतः गृहम् अहं न जानामि इत्यतः तत्र न आगतं मया। धनं स्वीकृत्य गणयतु। सर्वं सम्यक् अस्ति वा इति वदतु?'' इति उक्त्वा धनं दत्तवान्।

सुधीरः धनं स्वीकृत्य सोमनाथं कृतज्ञतावचनानि उक्त्वा पशुपतिं नमस्कृत्य अनुज्ञां प्राप्य ततः गतवान्।

तस्य निर्गमनस्य अनन्तरं सोमनाथः पशुपतिम् उक्तवान्– ''दृष्टं खलु सर्वम् अपि? यथा भवता चिन्त्यते तथा सुधीरः गर्वयुक्तः यदि स्यात् तर्हि भवता यदा अस्वास्थ्यवार्ता प्रेषिता तदा सः अवदिष्यत्– 'अस्वास्थ्यं चेत् वैद्यः द्रष्टव्यः। अत्र निवेदनेन किम्?' इति। किन्तु सः उपकारबुद्ध्या झटिति उपस्थितः अभवत्'' इति।

''आम्। सुधीरः अभिमानधनः। स्वाभिमानस्य गर्वस्य च भेदः मया इदानीं ज्ञातः'' इति उक्तवान् पशुपतिः।






स्वयम्प्रभायाः साहाय्येन ऋक्षबिलात् बहिः आगतानां वानराणां पुरतः तरङ्गैः उच्चलन् सुविशालः समुद्रः दृश्यते स्म। अग्रे किं करणीयम् इति अजानन्तः वानराः परस्परं मुखं पश्यन्तः सन्ति।

विन्ध्यपर्वतस्य नैर्ऋत्यदिशि वृक्षाणाम् अधः उपविश्य सर्वे वानराः चिन्तामग्नाः जाताः। यतः सुग्रीवेण सूचितः अवधिः तावता समाप्तः आसीत्। 'वयं सर्वे निश्चयेन सुग्रीवस्य कोपस्य आहाराः भवामः' इति ते जानन्ति स्म।

सर्वेषां मुखे चिन्तारेखाः दृश्यन्ते। किन्तु किमपि वक्तुं कस्यापि धैर्यं नास्ति। भयकम्पितहृदयाः ते सर्वे परस्परं मुखं पश्यन्तः उपविशन्ति। न कोऽपि किमपि वदति। बहूनां दृष्टिः तु अङ्गदस्य उपरि। एतस्मिन् सन्दर्भे अङ्गदस्य आशयः कः इति ज्ञातुम् इच्छन्ति ते।

वानराणाम् आशयं जानन् इव अङ्गदः उक्तवान्– "मित्राणि! वयं यदा ऋक्षबिले आस्म तदा एव सुग्रीवेण सूचितः अवधिः समाप्तः। हनूमतः सूचनायाः अनुगुणं सुग्रीवः पूर्वम् आज्ञापितवान् आसीत् यत् पञ्चदशदिनाभ्यन्तरे सर्वे वानराः किष्किन्धायाम् उपस्थिताः भवेयुः इति। एषा घटना आश्वयुजमासे प्रवृत्ता। लक्ष्मणः कुपितः सन् यदा आगतः तदा सुग्रीवः पुनः आज्ञापितवान् यत् एतावता अनुपस्थिताः वानराः दशदिनाभ्यन्तरे उपस्थिताः भवेयुः इति। अनन्तरं मासात्मकम् अवधिं संसूच्य

९. सम्पातिकथा।



एतस्यां दिशि अस्मान् प्रेषितवान्। निश्चिते अवधौ वयं न प्रतिगतवन्तः, न वा सीतायाः वार्ता प्राप्तवन्तः। सीनायाः वार्ता यदि प्राप्ता स्यात् तर्हि अवधौ अतीते अपि वयं क्षमार्हाः अभविष्याम। किन्तु सीतायाः वार्ता तु न प्राप्ता। अतः विलम्बेन गतान् अस्मान् सुग्रीवः क्षाम्येत् इति चिन्तनम् अनुचितं स्यात्। इतः परं किष्किन्धां प्रति गतं चेत् महत् अपमाननं सोढव्यम्। सुग्रीवस्य निन्दावचनानि सोढव्यानि। अन्ते चित्रहिंसां प्राप्य प्राणाः त्यक्तव्याः च। एतदपेक्षया अत्रैव प्रायोपवेशक्रमेण प्राणत्यागः वरं स्यात्। शत्रोः वालिनः पुत्रे मयि सुग्रीवस्य सदभिप्रायः न स्यात् एव। रामस्य आज्ञां पालयन् सः मां युवराजं कृतवान्, न तु स्वबुद्ध्या। अतः अवकाशे प्राप्ते, सः मां कठोरं दण्डयेत् एव। अस्माकं मरणं प्रत्यक्षं पश्यताम् आत्मीयानां दुःखम् अवश्यं भवेत्। अतः किष्किन्धागमनं किमर्थम्? अत्रैव प्राणान् त्यजाम। भवन्तः यथा इच्छन्ति तथा कुर्वन्तु। अहं तु अत्रैव प्रायोपवेशक्रमेण प्राणान् त्यक्ष्यामि। समुद्रप्राणिनाम् आहारः भविष्यामि'' इति।

अङ्गदस्य वचनानि श्रुत्वा दुःखिताः वानराः– ''वयम् अपि भवन्तम् एव अनुसरिष्यामः। सीतावार्ता प्राप्ता चेदेव प्रतिगमनस्य विचारः, नान्यथा। सीतावार्ता प्राप्ता चेत् सन्तुष्टः रामः अस्मान् क्षमया अनुगृह्णीयात्। रामस्य व्यवहारं विरोद्धुं नार्हति सुग्रीवः'' इति उक्तवन्तः।

तदा तारः उत्थाय उक्तवान्– ''किमर्थं प्राणत्यागचिन्तनम् इदानीम्? वयं पुनरपि ऋक्षबिलं प्रविशाम। स्वयम्प्रभायाः औदार्येण वयं तत्र सुखेन जीवितुम् अर्हामः। आहारः भोगसाधनानि च तत्र पर्याप्तमात्रेण सन्ति एव। रामात् सुग्रीवात् वा अस्माकं न भयं तत्र'' इति।

एतत्सर्वं श्रुत्वा हनूमान् चिन्तितवान्– 'एषः अङ्गदः न सामान्यः। महती सूक्ष्ममतिः एतस्य। देशं कालं च चिन्तयन् चातुर्येण व्यवहरति एषः। कदाचित् उपायेन सुग्रीवात् वानरराज्यं स्वीकर्तुम् अपि अर्हति एषः। यतः

तादृशं सामर्थ्यम् अस्ति एतस्य। तारस्य कथनम् अङ्गीकृत्य ऋक्षबिले वसेत् अपि कदाचित्। अनुभवरहितः एषः। वयोनुगुणं चिन्तयन् साहसे मनः कुर्यात्। एतस्य विपरीतं चिन्तनम् इदानीम् एव निबारणीयम्' इति।

अनन्तरं सः अङ्गदम् उद्दिश्य उक्तवान्— "वत्स, अङ्गद! सुग्रीवस्य विरोधं मा चिन्तयतु। एते सामान्याः वानराः, यस्य अधिकं सामर्थ्यं तम् आश्रित्य तिष्ठन्ति। अतः एतेषु विश्वस्य अग्रे गमनम् अनुचितम्। मां, जाम्बवन्तम्, अन्यान् वानरवीरान् च सुग्रीवात् पृथक्कर्तुं न अर्हति भवान्। ऋक्षबिले आश्रयः प्राप्येत इति चिन्तयेत् भवान्। किन्तु स्वयम्प्रभा आश्रयदानम् अङ्गीकुर्यात् एव इति नास्ति विश्वासः। तत्र आश्रयः प्राप्तः चेदपि लक्ष्मणस्य बाणानां प्रतिबन्धकं न भवेत् एतत् ऋक्षबिलम्। प्राणरक्षणार्थं तत्र गतस्य भवतः गौरवं क्षीणं भवति। गौरवरहितं जीवनं किं वीरस्य शोभते? रामलक्ष्मणयोः विरोधं सम्पाद्य लोके कोऽपि जीवितुं न अर्हति। धर्मात्मा सुग्रीवः अविवेकेन कदापि न व्यवहरति। भवद्विषये तस्य कोपः सर्वथा नास्ति। वालिविषये यत् अनुचितं कृतं तत् स्मरन् सः भवद्विषये सद्व्यवहारं प्रदर्श्य कीर्तिं प्राप्तुम् इच्छति। भवतः मातुः विषये च तस्य विशेषादरः। एवं स्थिते अपि सः भवतः अहितं यदि चिन्तयेत् तर्हि अहं भवतः पक्षे भविष्यामि। सुग्रीवं



सम्मुखीकरिष्यामि" इति।

हनूमतः वचनं निराकुर्वन् अङ्गदः— "भवता यथा उच्यते तथा विशेषगुणाः सुग्रीवे न सन्ति एव। अग्रजेन वालिना यदा एषः गुहाद्वाररक्षणार्थं नियुक्तः आसीत् तदा अग्रजः गुहातः बहिः आगन्तुं यथा न शक्नुयात् तथा गुहाद्वारं शिलया पिधाय आगत्य स्वयं सिंहासनम् आरूढवान्। रामेण कृतम् उपकारं विस्मृत्य भोगे लीनः जातः। लक्ष्मणस्य कोपं दृष्ट्वा भीतः सः सीतान्वेषणकार्ये अस्मदादीन् योजितवान् अस्ति, न तु स्वोत्साहेन। अन्यच्च तद्विषये मम या भावना अस्ति सा च इदानीं भवतां पुरतः मया प्रकटिता। मया अविवेकेन व्यवहृतम्। भवद्द्वारा सः मम हृद्गतं



ज्ञास्यति एव। तदा मम मरणम् एव शरणम्। अतः अहं किष्किन्धां न प्रत्यागमिष्यामि। भवन्तः प्रतिगच्छन्तु। रामलक्ष्मणौ मन्नमस्कारान् निवेदयन्तु'' इति वदन् अश्रूणि स्रावितवान्।

अनन्तरं मातरं तारां पुनः पुनः स्मरन् सः अश्रूणि स्रावयन् दर्भान् प्रसार्य तेषाम् उपरि शयनं कृतवान्।

अङ्गदं दृष्ट्वा अन्ये वानराः– ''युवराज! वयम् अपि भवन्तम् अनुसरिष्यामः'' इति वदन्तः समुद्रे स्नात्वा दर्भान् प्रसार्य शयनं कृतवन्तः।

शयानाः एव ते रामवनगमनं, सीतापहरणं, जटायुमरणं, वालिवधं, सीतान्वेषणप्रयत्नं च पुनः पुनः स्मरन्तः वार्तालापं कृतवन्तः।

वानराणां कोलाहलः समीपस्थायां गुहायां निवसता केनचित् महागृध्रेण श्रुतः। सः मन्दं गुहातः बहिः आगत्य वानरान् दृष्ट्वा– ''अहो, अद्य मम पूर्णोदरं भोजनम्'' इति उच्चैः अवदत्।

गृध्रमुखात् निर्गतम् एतत् वचनं वानरैः श्रुतम् एव। अकस्मात् श्रुत्वा सर्वे वानराः दिग्भ्रान्ताः।

तदा अङ्गदः हनूमन्तम् उक्तवान्– ''एषः जटायुसदृशः कश्चन महापक्षी। जटायुना रामकार्यार्थं यथा प्राणाः अर्पिताः तथा अस्माभिः अपि क्रियमाणम् अस्ति। जटायुना कीर्तिः प्राप्ता। वयं तु कार्यं साधयितुम् असमर्थाः अपकीर्तिं प्राप्स्यामः। अस्माकं मरणम् आसन्नम्। अहो दौर्भाग्यम् अस्माकम्'' इति।

वानराणां वचनं श्रुत्वा गृध्रः– ''कः सः? मम अनुजः जटायुः किं मृतः? सत्यं वा एतत्? अहो दुर्विधिः! रावणेन मारितः वा सः? जटायु-रावणयोः युद्धं किमर्थं जातम्? हा अनुज! कुत्र गतः भवान्?'' इति वदन् रोदनं कृतवान्।

अनन्तरं वानरान् उद्दिश्य– ''मित्राणि! सूर्यकिरणानां कारणतः मम पक्षद्वयं दग्धम् अस्ति। अतः पर्वतशिखरात् अधः आगन्तुं न शक्नोमि अहम्। मम नाम सम्पातिः इति।

अहं जटायोः सहोदरः। कृपया माम् अधः नयन्तु। अहं भवद्भिः सह वार्तालापं कर्तुम् इच्छामि'' इति अवदत्।

भवतः सर्वान् खादामि इति उक्तवान् गृध्रः एव मां भवत्समीपं नयन्तु इति वदन् अस्ति। तथापि वानराणां भीतिः तु नास्ति। मरणं प्रतीक्षमाणानां पुनः भीतिः कुतः? अतः अङ्गदः धैर्येण पर्वतशिखरं गत्वा सम्पातिम् अधः आनीतवान्।

अनन्तरं सः आत्मनः इतिवृत्तं निवेदितवान्– ''इक्ष्वाकुवंशीयस्य राज्ञः दशरथस्य ज्येष्ठः पुत्रः रामः पितृवाक्यपरिपालनार्थम् अनुजेन लक्ष्मणेन पत्न्या सीतया च सह वनवासार्थं प्रस्थाय दण्डकारण्यं प्राप्तवान्। जनस्थाने रावणः वेषान्तरेण आगत्य सीतां बलात् नीतवान्। रावणेन बलात् नीयमानां सीतां दृष्ट्वा कुपितः दशरथस्य मित्रं जटायुः प्रतिरोधं प्रदर्शितवान्। रावणेन हतः अभवत् च। रामः जटायोः अन्त्यसंस्कारं कृत्वा पत्नीं सीताम् अन्विष्यन् अस्मत्प्रदेशम् आगतवान्। मम पितृव्यस्य सुग्रीवस्य रामस्य च सख्यं जातम्। मम पितरं बालिनम् एकेनैव बाणेन मारयित्वा रामः सुग्रीवं सिंहासने उपवेशितवान्। सुग्रीवस्य आज्ञायाः अनुगुणं वयं सीताम् अन्विष्यन्तः एतावद्दूरम् आगताः। सीतावार्ता तु न प्राप्ता। सुग्रीवेण सूचितः अवधिश्च समाप्तः। किष्किन्धा प्रतिगता चेत् सुग्रीवः



रामः वा अस्मान् मारयिष्यति एव। अतः अत्रैव मरणार्थं सन्नद्धाः स्मः वयम्'' इति।

तदा सम्पातिः स्वविषयं निवेदितवान्– ''वानरमित्राणि! रावणेन सह युद्धं कृत्वा प्राणान् त्यक्तवान् दशरथमित्रं जटायुः मम अनुजः। पक्षरहितः अहं वृद्धः जातः अस्मि। अतः प्रतीकारं साधयितुं मम सामर्थ्यं नास्ति इदानीम्। किं करोमि अहम्? पूर्वं यदा वृत्रासुरवधः जातः तत्समये आवयोः सहोदरयोः मध्ये जिज्ञासा उत्पन्ना – आवयोः कस्य सामर्थ्यम् अधिकम् इति ज्ञातव्यम् इति। अतः आवां सूर्यलोकं प्रति प्रस्थितवन्तौ। यदा सूर्यलोकः आसन्नः तदा अनुजः जटायुः सूर्यतापं सोढुम् अशक्तः सन् हाहाकारं



कृतवान्। तस्य रक्षणार्थम् अहं तदुपरि मम पक्षौ प्रसारितवान्। मम पक्षौ दग्धौ। अहम् एतस्य विन्ध्यपर्वतस्य उपरि पतितः। तदारभ्य अत्रैव अस्मि। मम अनुजस्य का गतिः जाता इति ततः आरभ्य न जानामि'' इति।

तदा अङ्गदः सम्पातिं कुतूहलेन पृष्टवान्– ''सः दुष्टः राक्षसराजः रावणः कुत्र निवसति इति भवान् किमपि जानाति वा?'' इति।

''सः रावणः लङ्कानामके नगरे निवसति। सः विश्रावसोः पुत्रः। कुबेरस्य अनुजः सः।. इतः दशयोजनदूरे समुद्रमध्ये विद्यमाने द्वीपे लङ्कानगरी अस्ति। समुद्रम् उल्लङ्घ्य भवद्भिः लङ्कानगरी प्राप्ता चेत् तत्र रावणः सीता च दृश्येते इति भाति मम। मम दृष्टिः सूक्ष्मा। रावणेन नीयमाना काचित् सुन्दराङ्गी पूर्वं दृष्टा मया। तया 'राम राम' इति उच्यमानम् अपि श्रुतं मया। अतः सीतापहर्ता, मम अनुजस्य हन्ता च सः अवश्यं मारणीयः। तस्य मरणं जातं चेदेव मम तृप्तिः। भवताम् अभीष्टसिद्धिः भवतु इति आशासे। अतः समुद्रोल्लङ्घनोपायं चिन्तयन्तु भवन्तः'' इति उक्तवान् सम्पातिः।

अनन्तरं सम्पातेः अपेक्षायाः अनुगुणं वानराः तं समुद्रतीरं नीतवन्तः। सम्पातिः अनुजाय जलतर्पणं समर्पितवान्। सीता कुत्र अस्ति इति ज्ञातम् इत्यतः वानराः सन्तुष्टाः सन्ति।

जाम्बवान् सम्पातिं निवेदितवान् यत् सीतापहरणविषये भवता यत् ज्ञायते तत् विस्तरेण श्रावयतु इति।

तदा सम्पातिः उक्तवान्– ''पक्षरहितः विन्ध्यपर्वते पतितः अहम् अत्रैव वार्धक्यं प्राप्तवान्। मम पुत्रः माम् अन्विष्य अत्र आगतः, अत्रैव तिष्ठन् मम आहारं सम्पाद्य आनयति स्म। विशालकायस्य मम बुभुक्षा अधिका। एवं स्थिते कदाचित् पुत्रः सुपार्श्वः आहारानयनार्थं गतः रिक्तहस्तः सन् एव प्रत्यागतः। एतत् दृष्टवतः मम कोपः प्रवृद्धः। मम कोपस्य शमनार्थं सः प्रवृत्तं

निवेदितवान्– 'अहम् आहारान्वेषणं कुर्वन् महेन्द्रपर्वतं गतवान्। तत्र मया दृष्टं यत् कृष्णवर्णीयेन केनचित् सुवर्णवर्णीया सुन्दरी तरुणी नीयमाना अस्ति इति। तं कृष्णवर्णीयं ग्रहीतुम् अहम् अग्रे गतः। किन्तु सः कृष्णवर्णीयः आयुधं प्रदर्शयन् अपसरतु इतः इति गर्जितवान्। भीतः अहम् अपसृतवान्। सः कृष्णवर्णीयः वेगेन ततः निर्गतवान्। भूतानां मुखात् मया ज्ञातं यत् सः कृष्णवर्णीयः राक्षसराजः रावणः इति। क्रन्दनं कुर्वती तेन नीता सा सुन्दरी सीता इत्यपि मया तेषां मुखतः एव ज्ञातम्। एवं दृष्टः अपि आहारः हस्तगतः न जातः इत्यतः अहं रिक्तहस्तः एव प्रत्यागतः' इति। गुहास्थः अहम् अपि मम दृष्टिपाटववशात् सीतां नयन्तं रावणं सीतां चापि दृष्टवान्'' इति।



अनन्तरं वानराः सम्पातिना सह पर्वतस्य उपरि गतवन्तः। तत्र सम्पातिः वानरान् स्वस्य जीवनवृत्तं पुनः विस्तरेण निवेदितवान्– ''पक्षदाहकारणतः अहं यदा पतितः तदा अत्र कश्चन आश्रमः आसीत्। आश्रमे निशाकरः नाम महर्षिः निवसति स्म। एषा घटना अष्टसहस्रवर्षेभ्यः पूर्वं प्रवृत्ता। अहं महता कष्टेन सर्पन् मुनेः आश्रमं गतवान्। मुनिः कुत्रापि बहिः गतवान् आसीत्। अहं तं प्रतीक्षमाणः वृक्षस्य अधः स्थितवान्। तदा मया आश्चर्यकरं दृश्यं दृष्टं यत् स्नानं समाप्य आगच्छन्तं मुनिं भल्लूकाः, चमर्यः, व्याघ्राः, सिंहाः, गजाः, सर्पाः च अनुसरन्तः सन्ति। यदा मुनिः आश्रमं प्रविष्टवान् तदा ते प्रतिगतवन्तः। अन्तः गच्छन् मुनिः निशाकरः मम समीपम् आगत्य– 'गृध्रनायकौ सहोदरौ अहं जानामि। तयोः अन्यतरः ज्येष्ठः भवान् सम्पातिः खलु? भवतः अनुजस्य नाम जटायुः इति खलु? केनापि व्याधिना पीड्यमानः अस्ति वा भवान्? अथवा भवन्तं कोऽपि कोपेन दण्डितवान्? भवतः पक्षहीनता कथं जाता?' इति पृष्टवान्।

तदा अहं निशाकरमहर्षिं प्रवृत्तं निवेदितवान्– 'कैलासपर्वते स्थितस्य मुनेः पुरतः अहं मम अनुजश्च सशपथम्

उक्तवन्तौ यत् आवां सायङ्कालात् पूर्वं सूर्यमण्डलं प्रविश्य प्रत्यागमिष्याव: इति। तत: आवां प्रस्थितवन्तौ। नगराणि लघूनि दृष्टानि। आवाभ्यां मेघा: अतिक्रान्ता:। निरन्तरम् अग्रे गतम्। श्रम:, भीति:, मतिचाञ्चल्यं, दृष्ट्यस्थिरता इत्यादीनि मूर्च्छालक्षणानि आवयो: दृष्टानि। भूमि: सूर्य: च समाने दूरे दृश्येते स्म।

अहं मम अनुजश्च वेगेन सूर्यमण्डलम् उद्दिश्य गच्छन्तौ आस्व। 'मया एव प्रथमं सूर्यमण्डलं प्राप्तव्यम्' इति आवयो: उभयो: अपि तीव्रा इच्छा। अत: आवयो: गतौ क्षीणता न अभवत् एव। एवम् उपरि उपरि गच्छन्तौ आवां सूर्यमण्डलसमीपम् आगतवन्तौ।

तावता मया ज्ञातं यत् अनुज: जटायु: मूर्च्छां प्राप्नुवन् अस्ति इति। तस्य रक्षणार्थम् अहं मम पक्षौ प्रसारितवान्। एतेन अनुज: रक्षित: अभवत्। किन्तु मम पक्षौ दग्धौ। जटायु: जनस्थाने निवसति इति मया श्रुतम्। इत: परं जीविते आशा नास्ति मम। अत: पर्वतात् पतित्वा इहलोकव्यापारं समापयितुम् इच्छामि अहम्' इति।

तदा निशाकरमहर्षि: माम् उक्तवान्– 'भो:, वानरा: सीताम् अन्विष्यन्त: अत्र आगमिष्यन्ति। तदा भवान् तेषां साहाय्यं करिष्यति। तत्कारणत: भवान् पक्षौ पुन: प्राप्स्यति। अत: तं कालं प्रतीक्षमाण: धैर्येण अत्रैव तिष्ठतु' इति।

सम्पाति: एवं यदा वदन् आसीत् तदा एव तस्य पक्षौ उद्भूतौ। नूतनौ पक्षौ दृष्ट्वा सन्तोषम् अनुभवन् सम्पाति:– ''निशाकरमुने: कथनस्य अनुसारं पक्षौ प्राप्तौ मया। सीतावार्तां निवेदयता मया रामकार्यं यत् कृतं तस्य प्रभाव: एष: इति भाति। भवतां प्रयत्न: निश्चयेन सफल: भविष्यति। शुभवार्तां ज्ञात्वा एव रामं दृष्ट्वा भवन्त: तं तोषयिष्यन्ति। अहम् इदानीं मम पक्षयो: सामर्थ्यं परीक्षितुम् इच्छामि'' इति उक्त्वा आकाशमार्गेण गच्छन् कुत्रापि अदृश्यतां गतवान्।






# रजतमये दंष्ट्रे

कस्मिंश्चित् ग्रामे पूर्वं विष्णुः नाम कश्चित् आसीत्। तस्य मित्रं केशवः। तौ उभावपि अनाथौ। तयोः आत्मीयाः न सन्ति। वासार्थं गृहम् अपि नास्ति तयोः। तौ आदिनं ग्रामे कार्यं कुरुतः। सायं च पाकार्थम् आवश्यकानि तण्डुलदालादीनि स्वीकृत्य ग्रामसीमायां स्थितस्य वटवृक्षस्य समीपं गच्छतः।

वटवृक्षस्य प्रकाण्डभागे कश्चन कोटरः अस्ति। तस्मिन् तौ पाकपात्राणि वस्त्राणि च स्थापयतः। तस्यैव वृक्षस्य अधः शिलाः चुल्लीरूपेण योजयित्वा तौ पाकं कुरुतः। पात्रवस्त्रादिक्षालनं स्नानं च समीपस्थे कासारे। एवं वटवृक्षः एव तयोः आश्रयभूतं गृहम्।

प्रतिदिनं कार्यं समाप्य कासारे स्नात्वा तौ वटवृक्षसमीपम् आगच्छतः। तत्समये तयोः महती बुभुक्षा भवति। कटं प्रसार्य सुखेन उपविश्य वार्तालापं कुर्वन्तौ तौ पाकं कुरुतः। पक्त्वा भोजनं कुरुतः। प्रातःकालार्थं किञ्चित् अवशेषयतः। भोजनानन्तरं कटे शयानौ सुखेन निद्रां कुरुतः। एवं, गृहादीनाम् अभावे अपि तयोः जीवनं निश्चिन्तम् आसीत्।

बहोः कालतः विष्णु-केशवयोः तीव्रा इच्छा आसीत् यत् कदाचित् वा स्वकीयं गृहं निर्माय काञ्चित् तरुणीं परिणीय सुखेन दिनानि यापनीयानि इति। अतः एव तौ अधिकं परिश्रमं कृत्वा अल्पं व्ययं कुर्वन्तौ धनसञ्चयं कुरुतः।

कदाचित् सायङ्काले तौ कार्यं समाप्य पाकार्थम् अपेक्षितानि वस्तूनि स्वीकृत्य वटवृक्षस्य समीपम् आगतवान्तौ। पाकः आरम्भणीयः इति ताभ्यां यावत् उद्युक्तं तावता अदृष्टपूर्वौ कौचित् दीर्घौ हस्तौ तयोः



पुरतः पात्राणि अस्थापयत्।

एतत् दृष्ट्वा आश्चर्यचकितौ कृष्ण-केशवौ स्तब्धौ जातौ। तावता कश्चन पिशाचः कोटरात् मुखं बहिः प्रसार्य— "भवतोः अनुपस्थितौ एतं कोटरं प्रविष्टवान् अस्मि। कृपया क्षन्तव्यः अहम्। मत्तः भवतोः उपकारः एव भविष्यति, न तु अपकारः" इति अवदत्।

एतावता किञ्चित् धैर्यं प्राप्य उक्तवान् कृष्णः— "भोः, कियत् धाष्टर्यं भवतः? आवयोः अनुपस्थितौ वृक्षस्य कोटरं प्रविश्य 'क्षन्तव्यः अहम्' इति वदति वा भवान्? आगच्छतु मम पुरतः। यमसदनं प्रेषयिष्यामि भवन्तम्" इति।

एतत् श्रुत्वा नितरां भीतः पिशाचः झटिति बहिः आगत्य कृष्ण-केशवयोः पादौ गृहीत्वा— "भवन्तौ अपि यदि मां तिरस्कुरुतः तर्हि मया कुत्र वा गन्तव्यम्? पिशाचानां मध्ये स्थातुं न अर्हामि अहम्। भवन्तौ सज्जनौ इति निश्चित्य अत्र स्थितम्। आश्रयदानेन अनुगृह्य सज्जनत्वं भवद्भ्यां रक्षणीयम्" इति अवदत्।

"अन्यैः पिशाचैः सह वासार्थं भवान् किमर्थम् अनर्हः जातः?" इति कुतूहलेन पृष्टवान् केशवः।

तदा सः पिशाचः स्वस्य मुखं सुविशालम् उद्घाट्य प्रदर्शयन्— "मम दंष्ट्राद्वयम् अपि भग्नं जातम्। दंष्ट्रारहितः अस्माभिः सह स्थातुं नार्हति इति उक्त्वा अन्ये पिशाचाः मां दूरीकृतवन्तः। एवं निर्गतिकः अहं भवतोः आश्रयम् आगतवान्। भवतोः सर्वेषु कार्येषु अहं साहाय्यं करिष्यामि। भवतोः यः आहारः स एव आहारः भवितुम् अर्हति ममापि। कृपया आश्रयः दीयताम्" इति दैन्येन प्रार्थनाम् अकरोत्।

"स्वस्य उदरस्य पूरणार्थम् एव आवां महत् कष्टम् अनुभवावः। एवं स्थिते तृतीयस्य, तत्रापि पिशाचस्य, भवतः उदरस्य पूरणं कथं वा शक्येत? पिशाचस्य भवतः सहवासः एव मास्तु। भवान् निर्गच्छतु इतः" इति कोपेन उक्तवान् केशवः।

तदा कृष्णः— "मित्र, त्वरा मास्तु। तिष्ठतु

तावत्'' इति केशवम् उक्त्वा पिशाचं पश्यन्– ''दंष्ट्राद्वयं कथं भग्नम् इति तु न उक्तम् एव भवता'' इति उक्तवान्।

तदा पिशाचः दैन्येन कृष्णं पश्यन्– ''सा च महती कथा ....'' इति किमपि वक्तुम् आरब्धवान्। पिशाचस्य वचनं मध्ये एव स्थगयन् उक्तवान् केशवः– ''भवतः कथा भवत्समीपे एव भवतु। कर्मकरवृत्त्या जीवन्तौ आवां भवतः दीर्घां कथां किं, लघ्वीं कथाम् अपि श्रोतुं न सिद्धौ। तावान् समयः नास्ति आवयोः'' इति।

सः कृष्णं पश्यन् पुनः उक्तवान्– ''कृष्ण! अस्थाने कुतूहलं भवतः। येन केनापि कारणेन पिशाचस्य दंष्ट्राद्वयं नष्टं स्यात्। तस्य ज्ञानेन अस्माकं कः लाभः? वृथा समयहानिः'' इति।

एतत् श्रुत्वा पिशाचः रोदनस्वरेण– ''दंष्ट्रयोः अभावे आहारं सम्पादयितुम् अहं न अर्हामि इति मत्वा पिशाचाः मां दूरं प्रेषितवन्तः। सज्जनौ भवन्तौ अपि आश्रयदानं न अङ्गीकुरुतः। धिम् माम्! भवन्तौ मां गर्ते निखनताम्'' इति उक्त्वा अश्रूणि अमुञ्चत्।

पिशाचस्य दुःखं द्रष्टुम् अशक्तः कृष्णः उक्तवान्– ''अस्तु पिशाचमित्र! आवाभ्यां सह तिष्ठतु भवान्। किन्तु निर्वञ्चनया साहाय्यं करणीयं भवता'' इति।

''अहो भाग्यम्! नितराम् उपकृतः अस्मि'' इति वदन् पिशाचः तौ अनमत्। तदा कृष्णः




कुतूहलवशात् पुनः उक्तवान्– ''इदानीं निश्चिन्तः खलु भवान्? दंष्ट्रयोः भङ्गः कथं जातः इति इदानीं वा वदतु'' इति।

तदा पिशाचः दीर्घं निश्श्वस्य- ''इदानीं मास्तु। पश्यतु, अन्धकारः प्रसृतः। पाकः करणीयः खलु? अद्य अहम् एव पाकं करोमि'' इति उक्त्वा पिशाचः पाकार्थम् उद्युक्तः जातः। कृष्णः केशवश्च साहाय्यं कृतवन्तौ। रुचिकरं भोजनं सज्जीकृतम् आसीत् पिशाचेन। कृष्णः केशवः च आतृप्ति भोजनं कृतवन्तौ।

अनन्तरदिने प्रातः कृष्ण-केशवयोः उत्थानात् पूर्वम् एव पिशाचः तस्य प्रदेशस्य सम्मार्जनम् अकरोत्। कासारं गत्वा



मलिनानि वस्त्राणि प्राक्षालयत्। पाकार्थम् अपेक्षितानि शुष्काणि काष्ठानि अपि सङ्गृह्य आनयत्। पिशाचस्य एतादृशानि कार्याणि दृष्ट्वा कृष्णः केशवः च नितरां सन्तुष्टौ।

तस्मिन् दिने तौ किञ्चिदधिककालं यावत् कार्याणि कृतवन्तौ। यतः तस्मिन् दिने ताभ्यां पिशाचनिमित्तम् अपि वस्तूनि क्रेतव्यानि खलु? सायं कार्यं समाप्य तौ आपणं गत्वा वस्तूनि क्रीतवन्तौ। 'अधिकानि वस्तूनि क्रीयमाणानि सन्ति' इति ज्ञात्वा हसन् पृष्टवान् आपणिकः– "कः विशेषः? अद्य अधिकपरिमाणकानि वस्तूनि क्रीतानि? भवतोः अन्यतरस्य परिणयः जातः किम्? एवं तर्हि भवन्तौ गृहान्तरे निवसतः वा?" इति।

"तथा किमपि नास्ति श्रीमन्" इति हसन्तौ उक्तवन्तौ कृष्णः केशवः च। आपणिकः यदा हसन् आसीत् तदा तस्य मुखे स्थितः सुवर्णमयः दन्तः दृष्टः कृष्णेन। मार्गे सः केशवम् एतं विषयं निवेद्य– "मित्र! दन्तः पतितः चेत् यथा मानवः सुवर्णमयं दन्तं धरति, तथैव पिशाचः अपि कर्तुम् अर्हति खलु? पिशाचनिमित्तं सुवर्णमये दंष्ट्रे कारिते चेत् कथम्?" इति पृष्टवान्।

"सुवर्णमये दंष्ट्रे कारणीये चेत् महत् धनं व्ययीकरणीयम्" इति उक्तवान् केशवः।

"एवं तर्हि रजतमये दंष्ट्रे कारयाव। आवयोः समीपे सञ्चितं धनं यावत् अस्ति तावता एतत् कार्यं सम्पादयितुं शक्यते इति भाति। दंष्ट्रयोः प्राप्त्या पिशाचः शक्तिमान् भविष्यति। आवयोः साहाय्यं कृतज्ञतापूर्वकं स्मरन् सः आजीवनम् आवयोः सेवां करिष्यति। पिशाचाः निधिविषये जानन्ति। एषः पिशाचः यदि निधिं कुत्रापि प्रदर्शयेत् तर्हि महत् भाग्यं प्राप्तं भवेत् खलु?" इति सोत्साहम् उक्तवान् कृष्णः।

अनन्तरदिने तौ रजतदन्तकारणविचारं पिशाचं निवेद्य सञ्चितं धनं स्वीकृत्य नगरं प्रति प्रस्थितवन्तौ। तयोः व्यवहारं दृष्ट्वा पिशाचः आनन्दाश्रूणि अस्रावयत्।

नगरं गत्वा तौ सुवर्णकारं दृष्ट्वा रजतदंष्ट्रानिर्माणेच्छां निवेदितवन्तौ। "किमर्थम् एतत्?" इति पृष्टवान्

स्वर्णकारः। यदा एताभ्यां कारणम् उक्तं तदा 'एतादृशं कार्यं मया न क्रियते' इति उक्त्वा तौ प्रेषितवान् स्वर्णकारः। तौ अन्यस्य स्वर्णकारस्य समीपं गतवन्तौ। पिशाचसम्बन्धं श्रुत्वा एव सः स्वर्णकारः भीतः। अनन्तरं तौ शरभेन्द्रनामकस्य स्वर्णकारस्य समीपं गत्वा वस्तुस्थितिं गोपयन्तौ उक्तवन्तौ– "आवां नाटकसंस्थायां कार्यं कुर्वः। आवयोः अन्यतरेण पिशाचवेषः धर्तव्यः अस्ति। तदर्थं रजतमयं दंष्ट्राद्वयं कृत्वा ददातु कृपया" इति।

शरभेन्द्रः एतत् अङ्गीकृतवान्। अग्रिमधनं ताभ्यां स्वीकृत्य– "सप्ताहानन्तरम् आगत्य नीयताम्" इति उक्त्वा तौ प्रेषितवान्। सप्ताहानन्तरं तौ शरभेन्द्रस्य समीपं गतवन्तौ। तत्समये शरभेन्द्रस्य पार्श्वे तदीयः सप्तवर्षीयः पुत्रः आसीत्। सः रजतमये दंष्ट्रे हस्तेन स्वीकृत्य इतस्ततः परिवर्तयन् पश्यन् बहुधा प्रश्नान् पृच्छन् आसीत्।

शरभेन्द्रः आगतौ कृष्णं केशवं च दृष्ट्वा– "आगम्यताम्। समये आगतम्। एषः मम पुत्रः रजतमये एते दंष्ट्रे दृष्ट्वा बहून् प्रश्नान् पृच्छन् अस्ति। उत्तरं भवन्तौ एव वदताम्" इति उक्तवान्।

गुरुराजः एतौ आश्चर्येण पश्यन् कुतूहलेन पृष्टवान्– "रजतदंष्ट्रयोः स्वामिनौ भवन्तौ एव वा? भवन्तौ पिशाचनाटके अभिनयतः



इति श्रुतम्। नाटकस्य कथा का? नाटके अभिनयार्थं रजतमये एव दंष्ट्रे किमर्थम्?" इति।

किम् उत्तरं वक्तव्यम् इति अजानन् कृष्णः केशवस्य मुखं दृष्टवान्। तदा केशवः कथां कल्पयित्वा उक्तवान्– "कस्यचित् मान्त्रिकस्य वशे कश्चन पिशाचः भवति। तं पिशाचं कूप्यां बद्ध्वा स्थापयति सः मान्त्रिकः। स च पिशाचः दुश्चेष्टापरः। कदाचित् पिशाचविषये कुपितः मान्त्रिकः पिशाचस्य दंष्ट्रे भञ्जयित्वा तं दूरं प्रेषयति। ततः निर्गतः पिशाचः कञ्चित् निर्धनं शरणं गच्छति। सः निर्धनः करुणया स्वसमीपं विद्यमानं समग्रं धनं व्ययीकृत्य रजतमये दंष्ट्रे



कारयित्वा पिशाचाय ददाति। निर्धनस्य साहाय्यं कृतज्ञतापूर्वकं स्मरन् पिशाचः आजीवनं तस्य सेवां करिष्यति। एषा नाटकस्य कथा'' इति।

एतत् श्रुत्वा गुरुराजः हसन्– ''भवतः कथायां सारः एव न दृश्यते। पिशाचः साधुस्वभावयुतः तु न खलु? रजतमये दंष्ट्रे प्राप्ते चेत् सः किमर्थं मानवस्य सेवां कुर्यात्? स्वयं ततः पलायनं कुर्यात्'' इति उक्तवान्।

''अस्माकं कथायां तु पिशाचेन कृतज्ञतापूर्वकम् एव व्यवह्रियते। लोके एवं भवेत् वा न वा इति न जानीमः वयम्'' इति उक्त्वा रजतमये दंष्ट्रे स्वीकृत्य कृष्णः केशवश्च ततः प्रस्थितवन्तौ।

मार्गे केशवः कृष्णं पृष्टवान्– ''तेन बालकेन यथा उक्तं तथा एषः पिशाचः अस्मान् न वञ्चयेत् खलु?'' इति।

''तथा न कुर्यात् इति भाति। एतस्य पिशाचस्य स्वभावः सरलः। तथापि एतस्य पूर्वचरित्रस्य ज्ञानं वरम्'' इति उक्तवान् कृष्णः।

अनन्तरं तौ वटवृक्षस्य समीपं गत्वा पिशाचं बालकस्य सन्देहं निवेद्य– ''भवान् अस्मान् न वञ्चयेत् इत्यत्र कः विश्वासः? यदि भवान् वञ्चयेत् तर्हि निश्चयेन भवन्तं गर्ते निखनिष्यामः वयम्। श्रेष्ठस्य मान्त्रिकस्य साहाय्यम् अस्ति आवयोः'' इति उक्तवन्तौ।

तदा पिशाचः अश्रुपूर्णनेत्रः सन्– ''अहं तादृशः वञ्चकः न। मम दंष्ट्रे कथं नष्टे इति अहं वदिष्यामि। तत् श्रुत्वा भवन्तौ मयि विश्वसतः'' इति उक्त्वा स्वकथां विस्तरेण अवदत्–

''भवद्भ्यां यथा कल्पितं तथैव अहं केनचित् मान्त्रिकेण कूप्यां बद्धः आसम्। तस्य मित्रं पाशराजः इति। पाशराजेन अपि कश्चन पिशाचः गृहीतः आसीत्। तौ उभौ अपि भावयतः यत् मया गृहीतः पिशाचः एव बलवान् इति। एतद्विषये तौ सदा विवादं कुरुतः। आत्मनः श्रेष्ठत्वस्य ख्यापनार्थं तौ माम् अन्यं पिशाचं च स्पर्धार्थं प्रेरयतः। आवाभ्यां महत् कार्यं कारयतः। तालवृक्षं

योजनदूरं नयतु इति वदतः। मकरस्य दन्तान् गणयतु इति आज्ञापयतः। उक्तं कार्यं न कृतं चेत् सम्यक् ताडयतः।

कदाचित् तौ दुष्टौ मान्त्रिकौ मम, मत्प्रतिस्पर्धिनः पिशाचस्य च दंष्ट्रयोः महतीं शिलां बद्ध्वा आज्ञापितवन्तौ यत् एषा शिला पर्वतशिखरं प्रापणीया इति। एवं शिलानयनसमये मम दंष्ट्रे भग्ने। दंष्ट्राहीनस्य पिशाचस्य सामर्थ्यं नश्यति। अतः सः मान्त्रिकः तिन्त्रिणीदण्डेन मां ताडयित्वा दूरं प्रेषितवान्। स्वजातीयैः पिशाचैः अपि दूरीकृतः अहं भवन्तौ शरणं गतवान्'' इति।

कथां श्रुत्वा कृष्णः केशवश्च सन्तुष्टौ। 'एषः सज्जनः पिशाचः यदि शक्तिं पुनः प्राप्नुयात् तर्हि महत् साहाय्यम् अवश्यं कुर्यात्। कृतघ्नतां न प्रदर्शयेत्। एतस्य साहाय्येन आवयोः जीवनं सुखमयं भवेत्' इति आलोच्य तौ शरभेन्द्रेण सूचितेन क्रमेण पिशाचस्य मुखे दंष्ट्रे योजितवन्तौ। अनन्तरं पिशाचं कासारसमीपं नीत्वा– ''जले मुखं पश्यतु'' इति उक्तवन्तौ।

पिशाचः मुखं सुविशालम् उद्घाट्य जले प्रतिबिम्बम् अपश्यत्। ''अहो सौभाग्यम्! सुदृढे दंष्ट्रे प्राप्ते मया'' इति उक्त्वा हसन् आकाशं प्रति उड्डीय कुत्रापि अदृश्यः अभवत्।

कृष्णः केशवश्च आश्चर्येण खेदेन च एतत् पश्यतः। ततः भारभूतमनस्कौ तौ स्ववसतिं प्रति प्रस्थितवन्तौ। गमनसमये केशवः खेदेन उक्तवान्– ''तस्य बालकस्य यावान्, तावान् विवेकः अपि नास्ति खलु आवयोः। वञ्चनायाः सम्भावनां जानन्तौ अपि आवां विवेकन न व्यवहृतवन्तौ। मम तु भाति– बालकस्य कथनं निवेदयन्तौ आवां स्वयं पिशाचं वञ्चनामार्गं बोधितवन्तौ इति। किं विलापेन? इष्टं तु न सिद्धम्। सञ्चितं धनम् अपि नष्टम्। पिशाचस्तु स्वस्वभावानुगुण व्यवहृतवान्। दोषः तु आवयोः एव'' इति।

एतत् अङ्गीकुर्वन् कृष्णः शिरः चालयन् विषादेन हसितवान्।






# शठं प्रति शाठ्यम्

बगदादनगरे हसनः नाम कश्चन क्षौरिकः आसीत्। नगरस्य धनिकाः उच्चोद्योगिनः च क्षौरार्थं हसनस्य आपणम् आगच्छन्ति स्म। अतः हसनस्य अपि महान् गर्वः आसीत्।

कदाचित् हसनस्य गृहे काष्ठसङ्ग्रहः समाप्तः अभवत्। अतः हसनः द्वारस्य पुरतः स्थित्वा 'कोऽपि काष्ठविक्रेता अत्र आगच्छेत् वा?' इति प्रतीक्षमाणः आसीत्।

कश्चन काष्ठविक्रेता गर्दभस्य उपरि काष्ठानि आरोप्य तेन मार्गेण आगतवान्। हसनः तं स्वसमीपम् आहूय उक्तवान्– "भोः, मूल्यविषये चर्चा मह्यं न रोचते। विना वचनं गर्दभस्य उपरि स्थितानि सर्वाणि काष्ठानि अत्र अवतारयतु। पञ्च रूप्यकाणि दास्यामि अहम्" इति।

सः काष्ठविक्रेता एतत् अङ्गीकृत्य काष्ठानि हसनस्य गृहस्य पुरतः राशीकृत्य "धनं ददातु श्रीमन्" इति प्रार्थितवान्।

"गर्दभस्य उपरि स्थितानि सर्वाणि काष्ठानि दीयन्ते इति उक्तं खलु भवता? काष्ठमयः पर्याणः अपि दातव्यः भवता" इति उक्तवान् हसनः।

"कीदृशं वाणिज्यम् एतत्? पर्याणं दातुं न शक्यते एव" इति कोपेन उक्तवान् काष्ठविक्रेता।

"दत्तं वचनं विस्मृत्य अन्यथा वदति वा इदानीम्?" इति वदन् हसनः बलात् पर्याणं वशीकृत्य पञ्च रूप्यकाणि दत्त्वा "गच्छतु इतः" इति तर्जितवान्।

खेदम् अनुभवन् काष्ठविक्रेता ततः न्यायाधिकारिणः समीपं गत्वा प्रवृत्तं समग्रं निवेदितवान्। स च न्यायाधीशः प्रतिमासं क्षौरार्थं हसनस्य समीपम् एव गच्छति स्म। अतः सः हसनस्य व्यवहारम् एव समर्थयन्–

"अरबदेशीया जानपदकथा"

"असूयाकारणतः मिथ्यारोपं कुर्वन् अस्ति भवान्। भोः, जागरूकः भवतु। इतः परम् एवं पुनः क्रियते चेत् भवन्तं शूलम् आरोपयिष्यामि" इति उक्त्वा तर्जयित्वा प्रेषितवान्। रुदन् ततः स्वगृहं प्रति प्रस्थितवान् काष्ठविक्रेता।

मार्गे कश्चन वृद्धः अभिमुखम् आगतः। "किं भोः, रोदनं किमर्थम्? किं कष्टं भवतः?" इति प्रीत्या पृष्टवान् सः। काष्ठविक्रेता हसनेन कृतम् अन्याय्यं, न्यायाधिकारिणः पक्षपातबुद्धिं च विस्तरेण निवेदितवान्।

"एतावता निराशा किमर्थम्? अस्माकं राजा न्यायपक्षपाती। अतः भवान् तं पश्यतु। तेन भवतः हितं भविष्यति" इति सूचितवान् सः वृद्धः।

एतत् अङ्गीकृत्य सः काष्ठविक्रेता ततः राजभवनं गतवान्। अल्पे एव काले तेन राजदर्शनं प्राप्तम्। सः अश्रूणि स्रावयन् राजानां साष्टाङ्गं नमस्कृतवान्।

राजा 'रोदनकारणं किम्?' इति पृष्टवान्। काष्ठविक्रेता एतावत्पर्यन्तं प्रवृत्तं समग्रं निवेदितवान्।

"भोः, भवता किमपि अनुचितं तु न कृतम्। अतः रोदनं मास्तु। भवता न्यायः यथा प्राप्येत तथा मार्गम् अहम् उपदिशामि" इति उक्त्वा राजा एकम् उपायं सूचितवान्।

केषाञ्चित् दिनानाम् अनन्तरं सः काष्ठविक्रेता हसनस्य समीपं गत्वा पृष्टवान्– "भोः, मित्रस्य मम च क्षौरं



करणीयम्। एतदर्थं किं मूल्यम्?'' इति।

''उभयोः क्षौरार्थं रूप्यकद्वयं दातव्यम्'' इति उक्तवान् हसनः।

''एवं वा? तर्हि प्रथमं मम क्षौरं करोतु'' इति उक्तवान् सः काष्ठविक्रेता। काष्ठविक्रेतुः क्षौरं समाप्य पृष्टवान् हसनः– ''भवतः मित्रं कुत्र?'' इति।

''मित्रं बहिः अस्ति'' इति वदन् काष्ठविक्रेता बहिः गत्वा गर्दभम् आनीय हसनस्य पुरतः स्थापितवान्। ''पश्यतु, मम मित्रम् आगतम्। एतस्य क्षौरं करोतु'' इति निवेदितवान् सः।

एतत् श्रुत्वा क्रुद्धः हसनः– ''किम् उक्तम्? गर्दभस्य क्षौरं करणीयम् इति? माम् अपमानयितुम् उद्युक्तस्य भवतः कियत् धार्ष्ट्यम्? दन्तान् भञ्जयिष्यामि। मदम् अपनेष्यामि'' इति वदन् दण्डम् आनेतुम् अन्तः गतवान्।

तावता ततः निर्गत्य काष्ठविक्रेता राजानं सर्वं निवेदितवान्। राजा भटद्वारा हसनम् आनाय्य– ''पूर्वम् अङ्गीकृत्य इदानीम् एतस्य मित्रस्य क्षौरं निराकृतवान् वा भवान्?'' इति पृष्टवान्।

''प्रभो, एषः उद्धतः माम् उक्तवान् यत् गर्दभस्य क्षौरं करोतु इति। गर्दभः कस्यचित् मित्रं भवितुम् अर्हति वा?'' इति पृष्टवान् हसनः।

''पर्याणः भवता यदि काष्ठत्वेन भाव्येत तर्हि एतेन गर्दभः मित्रत्वेन कुतो वा न भावनीयः? अन्यच्च वृत्तौ गर्दभः एव एतस्य मित्रम्। एतस्य कथने अनौचित्यं किमपि नास्ति। दत्तस्य वचनस्य अनुगुणं भवता गर्दभस्य क्षौरं करणीयम् एव। एषा मम आज्ञा'' इति कठोरस्वरेण उक्तवान् राजा।

अनन्यगतिकः हसनः गर्दभस्य समग्रं शरीरं फेनकेन लेपयित्वा क्षौरं कर्तुम् उद्युक्तः। एतत् दृष्ट्वा जनाः हसितवन्तः। हसनस्य मानः गतः। मानहीनस्य सहवासः मास्तु इति भावयन्तः जनाः तस्य आपणं प्रति क्षौरार्थं गमनं परित्यक्तवन्तः एव।



## सुविशालकायः मीनः



अजोर्सद्वीपे १९७८तमे वर्षे प्राप्तः श्वेतमीनः एव अद्यावधि लब्धेषु विशालकायः मीनः। एतस्य मीनस्य दैर्घ्यं ९ मीटर् यावत् आसीत्। भारश्च ४,५३६ किलो. आसीत्।

१९८३ तमे वर्षे जनवरीमासे पेसिफिक्सागरे दृष्टः चण्डमारुतः तावत्प्रबलः आसीत् यत् तत्कारणतः भूभ्रमणवेगे प्रतिदिनं १/५ मिलीसेकेण्ड् ह्रासः दृष्टः। एतस्य चण्डमारुतस्य कारणात् एव वायुमण्डले ८.५% आधिक्यम् अपि दृष्टम्।



## भूभ्रमणवेगे ह्रासम् अकरोत् चण्डमारुतः

## सुदीर्घं गजदन्तयुगलम्



न्यूयार्कनगरे जूओलाजिकल् सोसैटिद्वारा प्रदर्शितं गजदन्तयुगलम् एव अद्यावधि प्राप्तेषु अतिदीर्घं भाव्यते। युगले अन्यतरस्य दक्षिणभागीयस्य दन्तस्य दैर्घ्यं ३.४१ मीटर्। वामभागीयस्य च दैर्घ्यं ३.३५ मीटर्।

# इतः परं ग्रामे एव मम वासः

| | |
|---|---|
| - नमस्ते कृष्ण, कः विशेषः? | What news, Krishna? |
| - अस्ति कश्चन विशेषः। इतः परं ग्रामे एव मम वासः। | I have something special. I will stay in the village hereafter. |
| - एवं वा? उद्योगः किं परित्यक्तः? | Is that so? You are giving up the job or what? |
| - आम्। ह्यः त्यागपत्रं समर्प्य आगतवान्। | Yes, I submitted my resignation yesterday. |
| - इतः परं ग्रामे कृषिः क्रियते भवता? | You will be doing farming in the village? |
| - आम्। ग्रामे अल्पा भूमिः अस्ति। वृद्धौ मातापितरौ भूमिं विक्रेतुं ग्रामवासं परित्यक्तुं वा न इच्छतः। अतः अहं ताभ्यां सह स्थास्यामि। | Yes, there is a small piece of land in the village. My old parents are not prepared to sell away the land and give up village life. I will stay with them. |
| - अनुजः अपि कश्चन अस्ति खलु भवतः? | You have an younger brother, don't you? |
| - आम्। स तु मुम्बयीनगरे वित्तकोषे अधिकारी। आवयोः अन्यतरेण ग्रामः गन्तव्यः एव आसीत्। अनुजः ग्रामजीवनं न इच्छति। अतः अहं गच्छन् अस्मि। | Yes, he is an officer in a bank in Bombay. One of us has to settle down in the village. My brother does not like village life. So I am going. |
| - सद्यः अत्र पुनरागमनं भवेत् वा? | You have plans of coming here in the near future? |
| - आगामिमासे आगमिष्यामि। मम आत्मीयस्य मित्रस्य विवाहः भविष्यति तदा। | I will be coming next month. A close friend of mine is getting married. |
| - तस्मिन् समये मम गृहम् अपि आगच्छतु। | Come home, then. |
| - अस्तु, प्रयत्नं करिष्यामि। | Right, I will try. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

### विजितां शीर्षिकां जून्-९१ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'फेब्रवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **निर्जीवं लालयसि किमर्थम्?**

द्वितीयचित्रम् - **सजीवं लालय, यथाहम्।**

प्रेषकः - किरण. डि. पाटील्, सेना चाल्, बि-ब्लाक्, गान्धीनगरम्, जोगेश्वरी (पूर्व), मुम्बई-६०




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अग्रिमधनम् - Advance
अङ्गरक्षकः - Bodyguard
अत्युत्कृष्टा - Very good
अद्यावधि - Till today
अवगतः - Understood
आशासे - I wish
कपोलकल्पितम् - Imaginary
कर्मकरः - Worker
कादाचित्कतया - Very rarely
कुद्दालः - Spade
कूपी - Bottle
क्षौरिकः - Barber
गर्दभः - Donkey
घटिकोत्सवः - Convocation
चयनम् - Selection
तुष्यति - Will be pleased
त्यागपत्रम् - Resignation
दन्तः - Tooth
दंष्ट्रा - Large tooth for cutting or tearing
नरभक्षकः - Man-eater
नीरसता - Disgust
पक्षः - Wing
पक्षपातः - Favouritism
परशुः - Axe
पर्याणः - Saddle
फेनकम् - Soap
प्रकाण्डः - Stem
भूतपूर्वः - Former
मातामहः - Mother's father
मिष्टालुकम् - Sweet potato
युगलम् - Couple
वलितः - Leaning to a side
वाचकः - Reader
वैशिष्ट्यम् - Speciality
संसत् - House of legislature
सभ्यः - Member of an audience
समक्षम् - In the presence of
सर्पति - Crawls
साग्रहम् - By compulsion
स्वर्णकारः - Goldsmith

# Cuddles always say "I love you."

Show your little ones how much you love them! And is there a better way of doing that than giving them a huggable, cuddlable playmate?

Cuddles. From the people who have given children the delightful entertainer of a magazine, Chandamama. Cuddles. A whole new range of stuffed toys. And, your old favourites. And, cute surprises being introduced regularly. Each one a sweet, adorable companion to your child. Absolutely safe. Designed to withstand childhandling.

Well, the fun and excitement of the festive season is just round the corner. Make it memorable for your child with a special gesture. With a Cuddle.

- CUDDLES — Stuffed toys from Chandamama.
- SAMMO — Mechanical and electronic toys from Chandamama

**CUDDLES**

Manufactured in technical collaboration with Sammo Corporation, South Korea.

**CHANDAMAMA TOYTRONIX**

Chandamama Toytronix Private Limited, Chandamama Buildings, Vadapalani, Madras - 600 026

*from*

**THE HOUSE OF**

**CHANDAMAMA**

I♥U

Mudra M CTPL 4274

**CUDDLES AND SAMMO TOYS WILL BE AVAILABLE AT ALL LEADING TOY OUTLETS EXCEPT IN THE STATES OF ASSAM, HIMACHAL PRADESH, MADHYA PRADESH AND NORTH EASTERN STATES**

